# सप्रभामयूखभाट्टचिन्तामणौ

## प्रथमाध्याये द्वितीयः पादः ।

अकार्यबोधकवाक्यप्रामाण्याधिकरणम् ।

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते १ शास्त्रदृष्टविरोधाच्च २ तथा फलाभावात् ३ अन्यानर्थक्यात् ४ अभागिप्रतिषेधात् ५ अनित्यसंयोगात् ६ विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ७ तुल्यं च साम्प्रदायिकम् ८ अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ९ गुणवादस्तु १० रूपात्प्रायात् ११ दूरभूयस्त्वात् १२ स्यपराधात्कर्तुश्च पुत्रदर्शनम् १३ आकालिकेप्सा १४ विद्याप्रशंसा १५ सर्वत्वमाधिकारिकम् १६ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् १७ अन्त्ययोर्यथोक्तम् ॥ १८ ॥**

प्रभा

विधिरूपस्य वेदभागस्य धर्माधर्मयोः प्रमाण्यं पूर्वपादे सिद्धम् । विध्यतिरिक्तवेदवाक्यप्रामाण्यव्यवस्थापनार्थमयं पाद आरभ्यते ।

**अतदर्थानाम्** इष्टानिष्टसाधनाविषयकप्रवृत्तिनिवृत्त्यन्यतररूपक्रियायास्तदन्वयिनो वार्थस्याप्रतिपादकानां 'वायुर्वै' इत्याद्यर्थवादवाक्यानां **आनर्थक्यं** धर्मे प्रमितिजनकत्वाभावः धर्मे अप्रामाण्यमिति यावत्, कुतः **आम्नायस्य** धर्माधर्मप्रमाणभूतस्य वेदस्य **क्रियार्थत्वात्** इष्टानिष्टसाधनविषयकप्रवृत्तिनिवृत्त्यन्यतररूपक्रियाप्रतिपादकत्वनैयत्यात् **तस्मात्** अर्थवादानामप्रामाण्यात् आम्नायस्य प्रामाण्यम् **अनित्यम्** अनियतम**मुच्यते** पूर्वपक्षिभिरितिशेषः वेदत्वावच्छेदेन प्रामाण्यं न सम्भवतीति यावत् ॥ १ ॥

तदेवं सर्वेषामर्थवादानामप्रामाण्ये साधारणं हेतुमुक्त्वा अर्थवादविशेषाणामप्रामाण्ये हेतूनाह—**शास्त्रदृष्टविरोधाच्च**—'स्तेनं मनः' 'अनृतवादिनी वाक्' इत्यादीनामर्थवा-

दानां स्तेयं कर्तव्यं मृषोद्यं कर्तव्यं इत्यादिविधिपरताकल्पनया प्रामाण्योपपादने नानृतं वदेत् इत्यादिना शास्त्रेण तस्माद् धूम एवाग्नेर्दिवा ददृशे नार्चिः इत्यस्य वाक्यस्य दिवा वह्निदर्शनादिरूपं यद् दृष्टं प्रत्यक्षं तेन च विरोधात् कथञ्चिदपि न स्वार्थे प्रामाण्यम् न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा इत्यपरं दृष्टविरोधस्योदाहरणम् ॥ २ ॥

**तथा** इति दूषणान्तरसमुच्चायकम् **फलाभावात्** गर्गत्रिरात्रब्राह्मणप्रकरणे शोभते अस्य मुखं य एवं वेद इति श्रुतस्य गर्गत्रिरात्रब्राह्मणाध्ययनफलस्य मुखशोभायाः तद्ब्राह्मणाध्यायिन्यपि कुमुखे अदर्शनात् न तद्वाक्यस्य स्वार्थे प्रामाण्यम् ॥ ३ ॥

पूर्णाहुतेरेव सर्वफलावाप्तिसाधनत्वे **अन्यानर्थक्यात्**–तदितरेषामग्निहोत्रादीनामनुष्ठाननैष्फल्यप्रसङ्गात् पूर्णाहुत्या सर्वान्कामानवाप्नोति इत्यादीनां न प्रामाण्यसम्भवः ॥४॥

न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि इत्यादीनां **अभागिप्रतिषेधात्** भागी प्रतिषेधभागी प्रतिषेधार्हः, भजनं भागः प्राप्तिस्तद्वान् इति वा प्रसक्त इति यावत्स न भवतीत्यभागी अप्रसक्तः तस्य अन्तरिक्षचयनादेः प्रतिषेधस्य प्रत्यायकत्वान्न प्रामाण्यम् ॥ ५ ॥

बवरः प्रावाहणिरकामयत इत्यादीनां न प्रामाण्यं **अनित्यदर्शनात्** अनित्यानां जन्यानां प्रवाहणतदपत्यबबरादीनां तत्र प्रतीयमानत्वात् तद्वाक्यानां तत्तत्पुरुषानन्तरभावित्वावश्यकतया पौरुषेयत्वेन भ्रमप्रमदादिशङ्काकलङ्कितत्वात् ॥ ६ ॥

सिद्धान्तमाह **विधीनां** विधेयानां **स्तुत्यर्थेन** स्तुतिरूपार्थेन विधेयान्वयिस्तुतिरूपार्थप्रतिपादकत्वेन **अर्थवादानां** वायुर्वै क्षेपिष्ठा इत्येवमादीनां **विधिना** वायव्यं श्वेतमालभेत इत्यादिना **एकवाक्यत्वात्** अर्थवादा धर्माधर्मयोः प्रमाणानि **स्युः**। अर्थवादवाक्यानां स्वातन्त्र्येण धर्माधर्मप्रतिपादकताविरहेऽपि स्तुत्युपस्थापकतया विधिवाक्यसहकारेण धर्माधर्मप्रामाण्यं नानुपपन्नमिति भावः ॥ ७ ॥

विध्यर्थवादयोः **साम्प्रदायिकं** सम्प्रदायासिद्धं अध्यायानध्यायगुरुमुखाधिगमादिकं **तुल्यञ्च** समानमेव। तथा च तत्सामान्यादितरेषु तथात्वमिति न्यायेन विधिसाधर्म्येण हेतुनार्थवादेषु प्रामाण्यं सिध्यतीति भावः ॥ ८ ॥

द्वितीयसूत्रोक्तानुपपत्तिं परिहरति शास्त्रदृष्टविरोधात् इत्युक्ता **अनुपपत्तिः अप्राप्ता च असम्बद्धा प्रयोगे हि** स्तेनं मनः इत्यादिना स्तेयाद्यनुष्ठाने विधीयमाने हि नानृतं इत्यादिना **विरोधः स्यात्** तदेव तु न **शब्दार्थस्तु स्तेनं** मनः इत्यादिशब्दप्रतिपाद्यत्वेनाभिमतार्थस्तु **अप्रयोगभूतः** न स्तेयाद्यनुष्ठानविधिरूपः नातो विरोध इति भावः ॥९॥

क्वचिदर्थवादे आपो वै शान्ता इत्यादौ वेतसशाखया चावकाभिश्चाग्निं विकर्षति इत्यादि विधिसन्निहिते विधेययोः वेतसशाखाऽवकयोस्स्तुतेरदर्शनेऽपि तदाधारभूतानामपां स्तुतिरपि **गुणवादस्तु** विधेयगुणवाद एव अभिजनसंस्तवेन अभिजातस्तुतेः पर्यवसानस्य लोकसिद्धत्वात् ॥ १० ॥

हिरण्यं हस्ते भवति अथ गृह्णाति इति विधिसन्निहिते स्तेनं मनः इत्यत्र **रूपात् अर्थ**वादरूपात् प्रयत्नसंचारत्वेन रूपेण स्तेनसारूप्यात् स्तेनत्ववादः तथा तद्विधिसन्निहिते **अनृ**-

तंवादिनी वाक् इत्यर्थवादे **प्रायात्** अनृतवादित्वबाहुल्यात् **अनृतवादित्ववादः** उच्यते हि प्रायेणानृतवादित्वात्पुंसां इत्यादि । तथा च इतरनिन्दया विधेयभूतस्य हस्तस्य तदुभयविलक्षणत्वात् भवति स्तुतिः ॥ ११ ॥

अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायं जुहोति इत्यादेः मन्त्रनियमविधेः सन्निहिते तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः इत्याद्यर्थवादे दिवा वह्न्यदर्शनस्य रात्रौ धूमादर्शनस्य च प्रतिपादनं **दूरभूयस्त्वात्** दूरभूयस्त्वमभिप्रेत्य अतिदूरदेशस्थत्वे हि दिवापि वह्निर्न दृश्यते धूमः परं दृश्यते एवं रात्रौ दूरदेशस्थत्वे अग्निरेव दृश्यते न धूमः इति न दृष्टविरोधप्रसङ्गः ॥ १२ ॥

प्रवरे प्रव्रियमाणे देवाः पितर इति ब्रूयात् इति विधिसन्निहिते न चैतद्विद्मो वयमब्राह्मणा ब्राह्मणा वा इत्यर्थवादे अज्ञानवचनं दुर्ज्ञानत्वेन गौणं दुर्ज्ञानता च यतः **स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनं** दृश्यते हि स्त्र्यपराधात् अब्राह्मणपुत्रत्वं यागकर्तरि । प्रवरानुमन्त्रणेन च अब्राह्मणो ब्राह्मणस्सम्पद्यते इति प्रवरानुमन्त्रणस्य विधेयस्य स्तुतिर्भवति ॥ १३ ॥

दिक्षवतीकाशान् करोति इत्ययं ज्योतिष्टोमे प्राग्वंशशालायाश्चतुर्दिक्षु द्वारकरणविधिः तत्सन्निधौ को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेति इत्याम्नातेऽर्थवादे आमुष्मिकस्य सन्दिग्धतया निन्दनं तात्कालिकधूमव्याप्त्यादिजन्यखेदप्रतिबन्धकस्य द्वारकरणस्य आवश्यकत्वेन स्तुत्यर्थं यतः **आकालिकेप्सा** आकालिके तात्कालिके फले ईप्सा उत्कटेच्छा भवति ॥ १४ ॥

गर्गत्रिरात्रविधिसान्निधावाम्नातः शोभतेऽस्य मुखं य एवं वेद इत्यर्थवादः **विद्याप्रशंसा** गर्गत्रिरात्रविधिवेदनप्रशंसारूपः क्रतोर्वेदनमेवेदृशं किमुत तदनुष्ठानमिति क्रतुं स्तोतुम्, अतो 'न फलाभावात्' इत्युक्तो दोषः ॥ १५ ॥

आधानप्रकरणे पठितस्य पूर्णाहुतिं जुहुयात् इत्यस्य विधेः सन्निधावाम्नातं पूर्णाहुत्या सर्वान्कामानवाप्नोति इत्यर्थवादे श्रुते **सर्वत्वम् आधिकारिकं** अधिकारः प्रकरणम् प्रक्रान्तक्रतुसाध्यफलगतयावत्त्वरूपम् यथा सर्वे ब्राह्मणा भोजयितव्याः इत्यत्र सर्वत्वं गृहागतब्राह्मणगतयावत्त्वरूपम् अतो नेतरक्रतूनामानर्थक्यम् ॥ १६ ॥

फलस्य स्वर्गादिरूपस्य **कर्मनिष्पत्तेः** कर्मभिर्निष्पत्तेः तेषां कर्मणां **परिमाणतः** लघुगुरुभावेन **फलविशेषः** फलेऽपि तत्तत्कर्मजन्ये लघुगुरुभावः स्यात् **लोकवत्** सेवातारतम्यात्फलतारतम्यवत् ॥ १७ ॥

**अन्त्ययोः** पञ्चमषष्ठसूत्रोक्तयोराक्षेपयोः **यथोक्तम्** उक्तप्रकारेण दूषणं वेदितव्यम् तत्र न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि इत्यस्यार्थवादस्य हिरण्यं निधाय चेतव्यम् इति विधिशेषतया तद्विध्याकाङ्क्षितस्तुतिबोधकत्वमिति स्तुत्यर्थेन विधीनां स्युः इति सूत्रोक्त एव परिहारः । प्रावाहणिशब्दस्य प्रवाहणापत्यं प्रकृष्टवहनशीलः ववरध्वनियुक्तः वायुरकामयत इत्यर्थस्यैव विवक्षणात् नानित्यसंयोगप्रसङ्गः इति परन्तु श्रुतिसामान्यमितिसूत्रोक्त एव परिहारः ॥ १८ ॥

विधेः प्रामाण्यं (१)निरूप्य धर्मप्रमाणनिरूपणप्रसङ्गादर्थवादादि प्रामाण्यं निरूप्यते, "विध्यर्थवादमन्त्राणा"मितिवार्तिकस्थं विधिपदं(२ नामधेयपरं, स्तुतिस्तुत्यसम्बन्धप्रामाण्यप्रतिपादनपरम् ,अर्थवादकल्प्य विधिपरं (३)वा व्याख्येयम् ।

नन्वस्तु स्वस्ववाच्यप्रवर्तना (निवर्तना) विषयभावनाविशेषणीभूत यागादाविष्टानिष्टसाधनताबोधनेन विधिनिषेधयोर्धर्माधर्मप्रामाण्यं "वायुर्वै क्षेपिष्ठा देवता" (४)इत्याद्यर्थवादानां तु सत्यप्यपौरुषेयत्वे न

---

**मयूखः**

( १ ) प्रथमाध्याये पादचतुष्केण क्रमेण विध्यर्थवादस्मृतिनामधेयानां धर्मे प्रामाण्यं प्रतिपादनीयं तत्र प्रथमपादे विधेः प्रामाण्यं निरूप्य अर्थवादादीनां प्रामाण्यं निरूपयितुकामः पूर्वापरग्रन्थयोरेकवाक्यताप्रतिपत्तये प्रसङ्गसङ्गतिं दर्शयितुमाह–**विधेः प्रामाण्यमिति** । प्रसङ्गश्च स्मृतिनिष्ठोपेक्षानर्हतावच्छेदको धर्मः । संगतित्वं च अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम् ।

अत्र धर्माधर्मयोः प्रमाणनिरूपणादध्यायसंगतिः, विध्यनिरिक्तवेदवाक्यप्रामाण्यनिरूपणात् पादसंगतिः, अनन्तरसङ्गतिस्तु पूर्वाधिकरणे विध्यर्थमपि अपौरुषेयत्वे निरूपिते कर्तृस्मरणाभावरूपयुक्तिसाम्यादर्थवादेषु प्रसक्ते तद्वदेव धर्मप्रमोत्पादकत्वमस्ति न वेति विचारादवगन्तव्या ।

( २ ) ननु प्रथमपादे एव विधेः प्रामाण्यस्य निरूपितत्वे द्वितीयपादारम्भे--

सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः ।
विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ॥

इति वार्तिकेन विरोधोऽत आह—**विध्यर्थेति** । **नामधेयपरमिति** । तेन चतुर्थपादे नामधेयनिरूपणेन न न्यूनता ।

( ३ ) **विधिपरमिति** । विधौ सत्येव समाहितसाधनत्वप्रतीतिरिति विध्यभावादौदुम्बरताया ऊर्गवरोधं प्रति साधनत्वं न सम्भवतीति औदुम्बराधिकरणे विध्युपयोगस्य प्रदर्शनादिति भावः । एतत्पक्षद्वयेऽपि विधिपदं नामधेयस्योपलक्षणं बोध्यम् ।

**केचित्तु** वार्तिकस्य विध्यर्थवादमन्त्राणामुपयोग इदानीमुच्यते इति नार्थः येन विध्युपयोगस्य इदानीं वक्तव्यत्वमावश्यकं स्यात्किन्तु इतिशब्दाध्याहारेण 'विध्यर्थवादमन्त्राणामुपयोग इति इदानीमर्थवादप्रामाण्यकथनेनोच्यते' इत्यर्थः ततः अर्थवादमन्त्रोपयोगकथनं विना त्रयाणामुपयोगोऽस्तीत्यर्थस्यासिद्धेरिदानीमर्थवादादिमात्रोपयोगकथनेऽपि त्रयाणामुपयोगोऽस्तीति इदानीमुच्यते इत्युक्तिरुपपन्नेति वदन्ति ।

( ४ ) 'वायव्यं श्वेतमालभेत भूतिकामः' इति विधिसन्निधौ 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इत्यर्थवादः ( तै० सं०२-

तयोः प्रामाण्यं सम्भवति तदनवगतेः, नवानधिगतार्थगन्तृत्वरूपप्रामाण्यसम्भवस्तदर्थस्य (१)लोकादवगतेः, नाप्यबाधितार्थत्वम् प्रजापतिरात्मनो वपामुदखिददित्यादावसत्त्वात्, वाक्यार्थमर्यादया इष्टसाधनप्रमाजननासम्भवादनुपपत्तिज्ञानाभावेन (२)लक्षणाध्याहाराद्यसम्भवाच्च दूरापेतं धर्माधर्मप्रामाण्यमिति चेत् ।

लक्षितप्राशस्त्यप्रकारकेष्टसाधनयागादिविशेष्यकशाब्दप्रमितिजनकत्वेन प्रामाण्यसम्भवात् शाब्दप्रवृत्तौ प्रवर्तनाज्ञानस्येव प्राशस्त्यज्ञानस्यापि हेतुताया बहुक्षीरादिवाक्यजन्यप्रवृत्तौ क्लृप्तत्वात् अध्ययनविधौ प्रयोजनवदर्थज्ञानजनकत्वेन स्वाध्यायस्य भाव्यत्वान्वयानुपपत्तेर्वा लक्षणाबीजत्वात् निष्कम्पप्रवृत्तिसिद्धये विध्यपेक्षितप्राशस्त्यलक्षणाया विधिनिषेधलक्षणापेक्षया लघुत्वात्(३) ।

प्राशस्त्यं चाननुगतमेव तत्तद्वाक्यबोध्यक्षेपिष्ठादेवतासाध्यताहेतुकाविलम्बितफलजनकत्वादिकं फलतारतम्यं वा बलवदनिष्टाननुबन्धित्वं वा, तच्च(४) तत्कर्मजनकव्यापारापेक्षया तत्फलाधिक्यरूपमिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं वा, तच्च वाक्यार्थ इव सर्वैः पदैरन्त्यपदेन वा लक्ष्यते, न चान्यानर्थक्यम्, आर्थवादिकपदार्थसंसर्गस्य सतोऽसतो(५) वा प्राशस्त्यलक्षणोपपादकत्वात्, न च केवलविधाविव सर्वत्र विधिनेष्टसाधनताबोधकेन तदाक्षेपः । क्रतुविधीना-

---

मयूखः ।

१-१ ) पठ्यते । तस्य वायुः क्षेपिष्ठा क्षिप्रगामिनी देवता वैशब्दः प्रसिद्धौ स्वेन भागधेयेन स्वसम्बन्धिना श्वेतपशुरूपेण हविषा यजमानस्तं प्रीणयति स च तुष्टो वायुः एनं भागप्रदं यजमानं भूतिमैश्वर्यं गमयति प्रापयत्येवेत्यर्थः ।

( १ ) तदर्थस्य—वायोः क्षिप्रगामित्वरूपस्य ।

( २ ) अनुपपत्तिज्ञानाभावेनेति । यथाश्रुतार्थप्रतिपादनेनोपपत्त्या इति शेषः । मीमांसकमते अनुपपत्तिज्ञानमेव लक्षणबीजम् न तु तात्पर्यानुपपत्तिर्वेदस्यापौरुषेयत्वेन तात्पर्यासम्भवादिति भावः । वस्तुतस्तु तात्पर्यग्राहकाभावात्तात्पर्यानुपपत्तेरप्यसम्भवो बोध्यः ।

( ३ ) लघुत्वादिति । प्रयोजनं—पूर्वपक्षे अर्थवादानुपस्थितप्राशस्त्यज्ञानादपि फलसिद्धिः, सिद्धान्ते मन्त्रवत् अर्थवादानामेव प्ररोचकत्वनियमात्तदुपस्थितप्राशस्त्यज्ञानादेव प्रवृत्तौ सेति बोध्यम् ।

( ४ ) तच्च—बलवदनिष्टाननुबन्धित्वं च ।

( ५ ) सतः—वायुक्षेपिष्ठत्वादेः । असतः—'देवा वै देवयजनमध्यवसाय दिशो न प्राजनू' इति दिङ्मोहादेः ।

मन्यप्रयोजकत्वस्यैव सार्थवादकविधीनां तदनाक्षेपकत्वादिति सम्प्रदायः।

प्रवर्तनामात्रविधिबोध्येष्टसाधनत्वादित्रितयस्य बाधोऽर्थबाधादित्युच्छृङ्खलाः।

प्राशस्त्यज्ञानं यागादिविशेष्यकं ज्ञानेच्छाप्रवृत्तीनां समानविशेष्यप्रकारकत्वनियमादिति केचित्।

भावनायामेव प्राशस्त्यान्वयः प्रवर्तनान्वयवदित्यन्ये। क्वचित्तु विध्यपेक्षितफलद्रव्यादिविशेषप्रमापकताप्यङ्गीक्रियते।

एतेन स्तेनं मनोऽनृतवादिनी वाक्, धूम एवाग्नेर्दिवा ददृशे नार्चिः, न चैतद्विद्मो ब्राह्मणाः स्मो वयमब्राह्मणा वा, को हि तद्वेद यद्यमुष्मिल्लोकेऽस्ति वा नवेति, पूर्णाहुत्या सर्वान् कामानवाप्नोति, न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि, बबरः प्रावाहणिरकामयत, इत्यादेर्यथाश्रुतार्थप्रतिपादकत्वे लक्षणादिना वा विधिकल्पनशास्त्रदृष्टविरोधकर्मान्तरानर्थक्याप्रसक्तप्रतिषेधानित्यसंयोगादिदूषणमपास्तम्।

अर्थवादाः अलौकिकेष्टसाधनीभूतार्थज्ञानजनकाः स्वाध्यायविधिबोधितप्रयोजनवदर्थप्रतिपादकत्वाद्विधिवत् तत्रापि तत्तद्विध्येकवाक्यत्वात् स्तुतिप्रकारकताद्दृशार्थप्रमितिजनका इति सूत्रार्थः॥

विधिवन्निगदाधिकरणम्।

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् १९ लोकवदिति चेत् २० न पूर्वत्वात् २१ उक्तन्तु वाक्यशेषत्वम् २२ विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् २३ प्रकरणे सम्भवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति २४ विधौ च वाक्यभेदः स्यात् २५।**

प्रभा।

'औदुम्बरो यूपो भवती'ति विधिसन्निधौ पठितः 'ऊर्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे' इत्यर्थवादः **अपूर्वत्वात्**–ऊर्गवरोधे फले औदुम्बरतायाः साधनस्य प्रमाणान्तरेणाप्राप्तत्वात् **विधिर्वा** पश्वादिफलोद्देशेन औदुम्बरत्वादिविधिरूप एव स्यात् **हि**—यतः **वादमात्रं**–अर्थवादमात्ररूपं चेद्वाक्यं प्राशस्त्यलक्षणया स्वार्थपरित्यागात् **अनर्थकं** स्यात् विधायकत्वाभावात्॥ १९॥

अत्र शङ्कते **लोकवदिति चेत्** यथा लोके 'इयं गौः क्रेतव्या' इतिविधिसन्निधौ पठ्यमानं 'इयं गौर्बहुक्षीरा' इति वाक्यं विधायकत्वाभावेऽपि स्तावकत्वेनैव सार्थकम् तथा प्रकृतोऽर्थवादोऽपि विध्यपेक्षितस्तुतिपरतयैव सार्थक इति चेत्॥ २०॥

परिहरति **न पूर्वत्वात्**—बहुक्षीरत्वादेः प्रत्यक्षप्रमाणान्तरावगतत्वात् अपूर्वत्वाभावेन विधायकत्वासम्भवेनागत्या लक्षणया स्तुतिपरताकल्पनेऽपि प्रकृते प्रमाणान्तरानवगतपश्वादिफलजनकत्वप्रतिपादकस्य विधिरूपत्वसम्भवे स्तुतिपरत्वकल्पनस्यायुक्तत्वमिति भावः ॥ २१ ॥

सिद्धान्तमाह—**उक्तं** 'विधिना त्वेकवाक्यत्वात्' इत्यत्रोपपादितं **वाक्यशेषत्वं तु** विधिवाक्यशेषत्वमेव 'ऊर्वा' इत्यादेः युक्तम्, आश्रयाभावेन गुणफलविधित्वासम्भवादिति शेषः ॥ २२ ॥

**क्वचित्** 'वायव्यं श्वेतमालभेत' इति विधिसन्निहिते 'वायुर्वा क्षेपिष्ठा' इत्यादिवाक्ये **विधिः**—'वायुः क्षिप्रगामी कर्तव्यः' इत्येवं रूपः **अनर्थकः**—असम्भवदर्थकः **तस्मात् स्तुतिः** विधेयप्रशंसैव लक्षणया **प्रतीयेत तत्सामान्यात्** असम्भवद्विधिकार्थवादत्वात् **इतरेषु** विधिवन्निगदेष्वपि ऊर्वा इत्यादिषु **तथात्वम्** स्तावकतया विधिशेषत्वम् ॥ २३ ॥

दर्शपूर्णमासप्रकरणे 'यो विदग्धः स नैर्ऋतो योऽशृतस्स रौद्रः यः शृतः स सदेवस्तस्मादविहता शृतं कृत्यस्सदेवत्वाय' इत्येतद्वाक्ये 'यो विदग्धः स नैर्ऋत' इत्यादि 'अविदहता' इत्यादिविधिशेषतया अर्थवादरूपं चेत् **प्रकरणे** स्वीये एव **सम्भवन्** निविशेत **अपकर्षः** प्रकरणादन्यत्र निवेशश्च **न कल्प्येत** नैर्ऋतयागानुवादेन विदग्धत्वविधाने तु अपकर्षः स्यादेव **हि**—यतः **तं प्रति** सन्निहितं दर्शपूर्णमासयागमुद्दिश्य **विध्यानर्थक्यम्** विदग्धत्वविधेरसम्भवदर्थकत्वं प्रकृतयागे निर्ऋतिदेवताविरहेण प्रकृतकर्मानुवादासम्भवात् ॥ २४ ॥

**विधौ च** 'यो विदग्ध' इत्यादि वाक्ये गुणविधौ स्वीक्रियमाणे **वाक्यभेदः स्यात्** स च न युक्तः तस्मादित्यनेनैकवाक्यत्वावगमात् ॥ २५ ॥

**(१)सौमापौष्णं त्रैतमालभेत (२)पशुकाम इति विकृतिविधिसन्निधौ औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर उर्क् पशव ऊर्जैवास्मानूर्जं पशूना-**

---

## मयूखः ।

( १ ) पूर्वाधिकरणे स्तावकत्वेन सर्वेषामर्थवादानां विध्येकवाक्यतयाऽनर्थक्यं परिहृतं सांप्रतं केषांचिदन्यविधयापि आनर्थक्याभावः इत्याक्षिप्य समाधातुमाक्षेपसंगत्या अधिकरणमारचयति सौमापौष्णमिति । अधिकरणसंगतिस्तत्र सप्तधा । पूर्वमाक्षिप्यत यत्र तत्र साक्षेपिका मता । पूर्वन्यायात्ययो यत्र प्रत्युदाहरणा तु सा । प्रसङ्गाच्चिन्त्यते यत्र तत्र प्रासाङ्गिकी मता । बुद्धिस्था चिन्त्यते यत्र बुद्धिस्थानात्मिका तु सा । कृत्वा यत्राधिकां शङ्कां पूर्वमेवातिदिश्यते । तत्रातिदेशिकी प्रोक्ता सङ्गतिर्न्यायवेदिभिः । चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते ॥

( २ ) त्रिभिः सहजैः इतः त्रीतः यो वा तिस्रः पिबति ततः स्वार्थिकोऽण् ।

प्नोत्यूर्जोऽवरुन्धा(१) इति समाम्नातम् ,

किमिदं विधिनिरपेक्षं प्रवृत्तिजनकसाध्यसाधनभावप्रमाजननेन प्रमाणमुत भवत्यन्तेन विहितस्यौदुम्बरत्वस्यान्तिमो भागः स्तावक इति चिन्ता,

तत्र चतुर्थ्युपस्थितसाध्यत्वस्य निरूपकापेक्षायां समभिव्याहृतौदुम्बरत्वस्य तद्विशिष्टयूपस्य च निरूपकत्वेनान्वयादिष्टसाधनत्वावगतौ प्रवृत्तिसिद्धेर्विधिनिरपेक्षस्य प्रवृत्तिहेतुज्ञानजनकत्वेन प्रामाण्यमिति पूर्वपक्षः ।

सिद्धान्तस्तु भवत्यर्थे कर्तृत्वेनान्वितस्यौदुम्बरत्वस्य कल्पितकरोत्यर्थकर्मत्वेनान्वयेन साध्यत्वनिरूपकत्वायोगात् , अतो विधिराव श्यकः, तत्सद्भावे प्रवर्तनान्वयार्थं विधेयस्य करणत्वेनान्वयकल्पनात् ।

न च विधीयमानस्यौदुम्बरत्वस्योर्गवरोधो रात्रिसत्रस्य प्रतिष्ठेवार्थवादिकं फलं भवत्विति वाच्यम् , यूपोद्देशेन विहितस्य तस्य परार्थत्वेन फलानपेक्षतया दृष्टान्तवैषम्यात् ।

न च फलोद्देशेन तस्य विधौ यूपस्याश्रयत्वमास्त्विति वाच्यम् , तत्प्रकरणाभावेन यूपत्वेन तस्यानुपस्थितेः । अतिदेशेन प्राप्तस्योपकारकत्वेनोपस्थितेर्जुह्वादिसाम्येन तस्याप्याश्रयत्वापत्त्या यूपपदस्य पाक्षिकानुवादत्वापत्तिः । अतो न विहितस्यौदुम्बरत्वस्य ऊर्ग्वा इत्यादि स्तावकम्(२) । एतेन(३) पर्णमय्यधिकरणं व्याख्यातम् ॥

---

मयूखः ।

( १ ) यूप इति । अस्मै इति षष्ठ्यर्थे । तथा च अस्य यूपस्य ऊर्जा ऊर्ग्रूपेण उदुम्बरेण प्रकृतिद्रव्येण ऊर्ग्रूपान्पशूनाप्नोति ऊर्क् बलं जीवनं वेत्यर्थः औदुम्बररूपं यूपं यो भावयति यजमानाय पशून् धारयति सोऽध्वर्युरिति यावत् ।

( २ ) यागफलात्फलान्तरकामनायामौदुम्बरो यूपः अन्यथा खादिर इति प्रयोजनं पूर्वपक्षे, सिद्धान्ते तु औदुम्बर एवेति बोधकम् ।

( ३ ) एतेनेति । यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति इत्यत्र यद्यपि पर्णताया अनारभ्याधीतत्वेन प्रयोगवचनोपस्थाप्यक्रतूपकारकत्वस्य विप्रकृष्टत्वमिति स्ववाक्यगतत्वेन सन्निहितमपापश्लोकश्रवणमेव यः पापं न शुश्रूषति स पर्णमयीं जुहूं कुर्यात् इति विपरिणामेन फलमाश्रयितुं युक्तं रात्रिसत्रप्रतिष्ठावत् तथापि शृणोतीत्यस्य वर्तमानापदेशतया पापश्रवणाभावस्य फलत्वं न प्रतिपत्तुशक्यम् , न च विपरीणामेन फलपरत्वं यथावस्थितस्वरूपहानप्रसङ्गात् पर्णतायाश्च जुहूपस्थितक्रत्वर्थत्वेन निराकाङ्क्षत्वादयुक्तं शब्दस्वरूपबाधनम् , नच पर्णत्वस्य फलं प्रति विधीयमानस्याश्रयः प्रकृतेऽस्त

## हेतुवन्निगदाधिकरणम् ।

**हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् २६ स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य २७ व्यर्थे स्तुतिरन्याय्येति चेत् २८ अर्थस्तु विधिशेषत्वाद्यथा लोके २९ यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात् ३०**

### प्रभा

चातुर्मास्ये वरुणप्रघासपर्वणि श्रुतः 'शूर्पेण जुहोति' इत्यादिविधिसन्निधौ पठितः 'तेन ह्यन्नं क्रियते' इत्यादिर्हेतुवन्निगदः **हेतुर्वा** हेतुत्वविधिरेव **स्यात् अर्थवत्त्वोपपत्तिभ्याम्** तदा कृत्वः शक्तिलक्षकतया तेन हि अन्नं कर्तुं शक्यते इत्येवं रीत्या तद्वाक्यस्यार्थवत्त्वम् साक्षादन्नकरणत्वस्य शूर्पेऽसम्भवेऽपि परम्परयाऽन्नकरणसाधनत्वात् यतः शूर्पमन्नकरणमतस्तेन होतव्यम् इत्युक्त्या येन येनान्नं क्रियते तेन तेन दर्वीपिठरादिना होतव्यमित्यधिकार्थलाभेन हेतुवादस्य प्रयोजनवत्त्वात् प्रणाडिकया अन्नकरणत्वस्योपपत्तिश्च भवतीत्यर्थः ॥ २६ ॥

सिद्धान्तमाह—**स्तुतिस्तु** स्तुतिपर एव स हेतुवन्निगदः कुतः **शब्दपूर्वत्वात्**—शब्दो विधिशब्दः तेन तद्गता स्तुत्यपेक्षा लक्ष्यते विध्यनपेक्षितहेतुपरत्वकल्पनापेक्षया विध्यपेक्षितस्तुतिपरत्वाश्रयणमेव न्याय्यमित्यर्थः **तस्य** अन्नकरणत्वगतहेतुत्वस्य **अचोदना च** न विधिः दर्वीपिठरादेः साधकतमत्वाविरहेण तद्गतान्नकरणत्वस्य हेतुत्वविधेरसम्भवात् ॥ २७ ॥

पूर्वपक्षी शङ्कते—शूर्पेऽपि साधकतमत्वाभावेन **व्यर्थे** स्तुत्यालम्बनान्नकरणत्वरूपार्थरहिते **स्तुतिः अन्याय्या अनुपपन्ना इति चेत्** ॥ २८ ॥

समाधत्ते—**अर्थस्तु** स्तुत्यालम्बन्नकरणत्वरूपार्थस्तु भवत्येव सिद्धान्ते शूर्पस्य स्थाल्यपेक्षया साधकतमत्वाभावेऽपि लाङ्गलाद्यपेक्षया **यथा** साधकतमत्वं **लोके** दृश्यते तथाविधसाधकतमत्वस्य लक्षणया प्रतिपादनेन **विधिशेषत्वात्** स्तावकतया विध्येकवाक्यत्वात् ॥ २९ ॥

---

### मयूखः ।

अनेनैव वाक्येनैवाश्रये दीयमाने वाक्यभेदः तस्मादपापश्लोकश्रवणमर्थवादः पशूनाप्नोति इति वदिति भावः ।

नन्वेवमनेनैवाधिकरणेन सिद्धे चतुर्थे तृतीयपादे पर्णमय्यधिकरणानर्थक्यमिति चेन्न औदुम्बराधिकरणसिद्धस्याप्यर्थप्रयुक्तत्वरूपप्रयोजनसूचनार्थत्वात् यद्वा भवतीत्यस्य वर्तमानापदेशतया विधिप्रत्ययाभावादुदुम्बरतायाः साधनत्वं न सम्भवतीति विध्युन्मीलनाय पशूनाप्नोतीत्यस्यसाध्यसमर्पकत्वमङ्गीकृत्यौदुम्बरतायाः साधनत्वं न सम्भवतीत्यत्र विचारः चतुर्थे तु पर्णतादेः साधनत्वमभ्युपेत्यानादृत्य वा विचारः इत्यपौनरुक्त्यम् ।

तुष्यत्विति न्यायेन हेतुविधिमभ्युपेत्याह—**यदि च अयं हेतुः** हेतुविधिः स्यात् तदा शूर्पगतस्यैवान्नकरणत्वस्य हेतुत्वम् **अवतिष्ठेत** न दर्वीपिठरादिगतस्यापि शूर्पस्यैव हेतुसाधनत्वेन **निर्देशात्** पूर्वपक्षी शङ्कते—**सामान्यादिति चेत्** सामान्यतः ( प्रकृत्यनपेक्षया ) प्रबलया तृतीयाश्रुत्या दुर्बलपदश्रुतिबाधात् अन्नकरणसामान्यस्यैव हेतुत्वं स्यादिति चेत् समाधत्ते—तथा सति **विधीनां** 'व्रीहिभिर्यजेत' इत्यादीनां प्रत्ययश्रुत्या पदश्रुतिबाधेन द्रव्यसामान्यस्यैव परिग्रहप्रसङ्गात् **अव्यवस्था स्यात्** अतः आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन तृतीयाश्रुतेर्दुर्बलपदश्रुत्यनुरोधो न दोषायेति भावः ॥ ३० ॥

**वरुणप्रघासेषु करम्भपात्राणि(१) जुहोतीत्युपक्रम्य शूर्पेण जुहोति तेन ह्यन्नं क्रियते इत्याम्नातम् । तत्र विहितस्य शूर्पकरणत्वस्यान्नकरणत्वरूपहेतुप्रतिपादकोऽयमर्थवादः । चतुर्गृहीतान्याज्यानि भवन्तीतिविधिविहितचतुर्गृहीतस्य न ह्यत्रानुयाजान्यक्ष्यन् भवतीत्यनूयाजाभावहेतुप्रतिपादकवत् । तेन यत्रानूयाजाभावः तत्र चतुर्गृहीतानीतिवद्यद्यदन्नकरणं तत्तद्धोमसाधनमिति व्याप्त्या दर्विपिठरादिसाधनप्रापकोऽयमर्थवाद(२) इति चेन्न—**

**श्रुतिविहितस्य शूर्पस्यानुमानिकदर्व्यादिभिर्विकल्पासम्भवेन तच्छब्दनिर्दिष्टशूर्पनिष्ठान्नकरणत्वस्यैव हेतुत्वापत्त्या च हेतुप्रतिपादनस्य व्यर्थत्वात् । वर्तमाननिर्देशेन (३)वर्तमानान्नकरणत्वस्य हेतोः साध्यसामानाधिकरण्याभावाच्च अतः प्राशस्त्यपरः प्राशस्त्यपरत्वं च क्वचिद्गौणवृत्त्या, क्वचिदनुवादतया क्वचिद्भूतार्थपरत्वेन, तदुक्तं—**

**विरोधे गुणवादः स्यादनुवादोऽवधारिते ।**
**भूतार्थवादस्तद्धानादनुवादस्त्रिधा मतः ॥**

**इति, एकार्थकताविरोधे गुणवादो गौणी वृत्तिः । यथा 'यजमानः प्रस्तरः' इत्यत्र । तद्धानं विरोधावधारणाभावे यथा 'सत्यं विज्ञानमानन्दं ब्रह्मेति' 'यन्न दुःखेन सम्भिन्नमि'त्यादि च देवताफलदातृत्वार्थवादस्तु विरोधिविरोधाद्गौण एवेति ॥**

---

**मयूखः ।**

( १ ) **करम्भपात्राणि** —यवमयसक्तुपात्राणि ।

( २ ) अर्थवाद इति । विधौ शूर्पपदं चोपलक्षणमवयुत्यानुवादो वा स्यादिति भावः ।

( ३ ) वर्तमाननिर्देशेनेति । क्रियते इति चावर्तमाने वर्तमाननिर्देशः प्ररोचनार्थत्वे युक्तो भवति नहि भूते भाविनि वा तादृशी प्रीतिर्जायते यादृशी वर्तमाने तेन रुच्यर्थत्वेन लक्षणया वर्तमाननिर्देशो युक्तो विध्यर्थत्वे तु निष्प्रमाणकं लक्षणाश्रयणमिति भावः ।

### मन्त्रप्रामाण्याधिकरणम् ।

**तदर्थशास्त्राद्वाक्यनियमाद्बुद्धशास्त्रादविद्यमानवचनादचेतनाऽर्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवदवचनादविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३१ ॥ अविशिष्टस्तु वाक्यार्थः ॥ ३२ ॥ गुणार्था वा पुनः श्रुतिः ॥ ३३ ॥ परिसंख्या ॥ ३४ ॥ अर्थवादो वा ॥ ३५ ॥ अविरुद्धं परम् ॥ ३६ ॥ सम्प्रैषे कर्मगर्हानुपालम्भः ॥ ३७ ॥ अभिधानेऽर्थवादः ॥ ३८ ॥ गुणादप्रतिषेधः ॥ ३९ ॥ विद्याऽवचनमसंयोगात् ॥ ४० ॥ सतः परमविज्ञानम् ॥ ४१ ॥ उक्तश्चानित्यसंयोगः ॥ ४२ ॥ लिङ्गोपदेशश्च तदर्थवत् ॥ ४३ ॥ ऊहः ॥ ४४ ॥ विधिशब्दाश्च ॥ ४५ ॥**

#### प्रभा ।

अर्थवादानां स्तावकत्वेन विध्येकवाक्यतया प्रामाण्यं साधितमिति तत्प्रत्युदाहरणसङ्गत्या मन्त्राणां प्रामाण्यं चिन्त्यते । **तदर्थशास्त्रात्** तस्य मन्त्रस्य अर्थो योऽभ्रयादानादि तद्विषयकस्य 'चतुर्भिरभ्रिमादत्ते' इत्यादेश्शास्त्रस्य दर्शनात् **मन्त्रानर्थक्यम्** मन्त्राणां 'देवस्य त्वा' 'अभ्रिरसि' 'बभ्रिरसि' 'हस्त आधये' एषामभ्यादानप्रकाशार्थानामानर्थक्यमर्थप्रकाशनरूपप्रयोजनराहित्यम् । अन्यथा लिङ्गेनैव तत्र मन्त्रस्य प्राप्तिसम्भवात् 'चतुर्भिरभ्रिमादत्ते' इत्यस्य वैयर्थ्यं स्यात् अविवक्षितार्थकत्वे तु अदृष्टार्थं मन्त्राणां तत्र विनियोगाय च विधेः सार्थक्यम् । एवं **वाक्यनियमात्** पदसमूहात्मकमन्त्रवाक्यस्य 'अग्निर्मूर्धा' इत्यादेर्यः क्रमनियमः तस्मादपि मन्त्राणामविवक्षितार्थत्वमन्यथा व्युत्क्रमपाठेऽपि अर्थबोधकत्वसम्भवान्नियमो व्यर्थः स्यात् अदृष्टार्थत्वे तु क्रमेण पठिता एवादृष्टं जनयन्ति नान्यथेति नियम उपपद्यते । एवं **बुद्धशास्त्रात्** अग्नीध्रेण अध्ययनकाले एव 'आग्नीध्राद्धिष्णियान् विहरति' इति । अग्निविहरणादिकं स्वकर्तव्यतया ज्ञातमिति तस्यैव 'अग्नीदग्नीन्विहर' मन्त्रेण शासनादविवक्षितार्थत्वं मन्त्राणाम् । एवम् **अविद्यमानवचनात्** 'चत्वारि शृङ्गा त्रयोऽस्य पादा' इत्यविद्यमानस्य चतुःशृङ्गत्वाद्युपेतस्य वृषभस्य प्रतिपादनात् **अचेतनार्थबन्धनात्** 'शृणोत ग्रावाण.' इत्यादौ अचेतनानामर्थनमर्थः प्रार्थना बन्धनं सम्बोधनं तस्मात् **अर्थविप्रतिषेधात्** 'अदितिर्द्यौरदितिरन्तरिक्षम्' इत्यादौ प्रतिपादितयोरादितौ द्युत्वान्तरिक्षत्वयोरर्थयोर्विरोधात् **स्वाध्यायवदवचनात्** अध्ययनकाले स्वाध्यायस्य वेदस्य यथाभ्यासस्तथार्थज्ञानस्यावचनादनभ्यासात् **अविज्ञेयात्** 'सृण्येव जर्फरी तुर्फरी तू' इति अविज्ञेयार्थकानां जर्फर्यादीनां प्रतिपादनात् **अनित्यसंयोगात्** 'किन्ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे

न तपन्ति धर्मम् आनो भर प्रमगन्दस्य वेदो नैचाशाखम्मघवन्नन्धयानः' इत्यादौ पौरु-षेयत्वप्रसञ्जकात् नैचाशाखरूपनगरस्य प्रमगन्दस्य राज्ञश्च संयोगात् प्रतिपादनात्। अ-नित्यस्य मन्त्राणामानर्थक्यमविवक्षितार्थत्वं तथा च न पूर्वोक्तदोषप्रसङ्ग इति भावः ३१

सिद्धान्तमाह—**वाक्यार्थः** वाक्यस्य लोके वेदे च अर्थः **अविशिष्टस्तु** तुल्य एवे-त्यर्थः, तथा च लोक इव वेदेऽपि पदानामर्थज्ञानार्थत्वमेव नादृष्टार्थत्वं 'दृष्टे सम्भवति' इति न्यायादिति भावः ॥ ३२ ॥

'तदर्थशास्त्रात्' इत्युक्तानुपपत्तीस्त्रिभिः परिहरति लिङ्गेन प्राप्तस्य 'तां चतुर्भिः' इति पुनः **श्रुतिः गुणार्था वा** चतुःसंख्यारूपगुणविधानार्थैव, पाठादेव चतुष्ट्वसिद्धौ चतु-र्भिरितिवचनं समुच्चयसिद्ध्यर्थमन्यथा विकल्पः स्यादिति भावः ॥ ३३ ॥

'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त' इति विधानं लिङ्गेनैव रशनादाने मन्त्रप्राप्त्या **परिसंख्या** गर्दभरशनातो मन्त्रस्य परिसंख्यार्थम् ॥ ३४ ॥

लिङ्गादेव सिद्धे 'उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति' इति पुनः श्रवणम् **अर्थ-वादो वा** 'यज्ञपतिमेव तत्प्रथयति' इत्यर्थवादार्थत्वादर्थवाद एव । अयं भावः अत्र 'पुरोडाशं प्रथयति' इत्यनेन पुरोडाशप्रथनं विधीयते उरुप्रथस्वेति मन्त्रस्य पुनरुपादानं तु एतन्मन्त्रकरणकत्वात्प्रथनं यज्ञपतेर्यजमानस्य प्रजापशुवृद्धिसाधनमिति स्तोतुमिति नानर्थं पुनरुपादानमिति ॥ ३५ ॥

**परं** द्वितीयं वाक्यनियमरूपं मन्त्राणामर्थपरत्वेऽपि **अविरुद्धम्** नियमादृष्टार्थ-मावश्यकं मन्त्राज्जायमानमर्थज्ञानं च नोपेक्षणीयमिति भावः ॥ ३६ ॥

**संप्रैषे**'अग्नीदग्नीन्विहर' इत्यादौ **कर्मगर्हा** बुद्धबोधनरूपकर्मणः गर्हा दूषणम् बुद्ध-स्यापि मन्त्रेण पुनर्बोधनस्य कर्मण आग्नीध्रे **संस्कारत्वात्** व्रीहिप्रोक्षणादिवत्संस्का-रजननार्थत्वेन संस्कारकर्मत्वाङ्गीकारात् **अनुपालम्भः** अदूषणम् ॥ ३७ ॥

**अभिधाने** अभिधीयतेऽनेनेति अभिधानं मन्त्रः तस्मिन् अविद्यमानवचनत्वेनो दाहृते 'चत्वारि शृङ्गा' इत्यत्र अचेतनार्थबोधनत्वेनोदाहृते 'शृणोति ग्रावाणः' इत्यत्र च **अर्थवादः** अर्थवादवत् गौण्या वृत्त्या यागस्तुतिः अचेतने चैतन्यारोपेण श्रवणप्रार्थनया 'ग्रावाणोऽपि शृण्वन्ति किमुत विद्वांस' इति श्रवणस्तुतिश्च । वार्तिकाभिमतदेवताचैत-न्यपक्षे ग्रावशब्दस्तदभिमानिदेवताविशेषे गौण इति वा ॥ ३८ ॥

अदितौ द्युत्वान्तरिक्षत्वयोर्विरोधः **गुणात्** गुणवृत्त्या स्तुतिविवक्षणात् 'त्वमेव माता च पिता त्वमेव' इतिवत् **अविप्रतिषेधः** अविरोधः स्यात् ॥ ३९ ॥

अध्ययनकाले **विद्याऽवचनम्** विद्याया अर्थज्ञानस्य अवचनमनभ्यसनम् **असं-योगात्** अभ्यासरूपसंयोगं विनापि सुकरत्वात् दुर्ग्रहत्वात्तु अक्षराभ्यास इति भावः ४०

'सृण्येव जर्फरी' इत्यत्र **सतः** विद्यमानस्यैवार्थस्य निरुक्ताद्यध्ययनाभावे सति **विज्ञानं** परम् प्रमादालस्यादिनाऽनवबोध एव न तु तत्रार्थो नास्तीति भावः यथाचैतत्तथा-वार्तिके स्पष्टम् ॥ ४१ ॥

'किन्ते कृण्वन्ति' इत्यत्रत्यः **अनित्यसंयोगः उक्तः** 'परन्तु श्रुतिसामान्यमात्रमि'त्यत्रादोषत्वेनोक्त इत्यर्थः ॥ ४२ ॥

मन्त्राणामर्थज्ञानार्थत्वे बाधकान्युद्धृत्य साधकान्याह–**लिङ्गोपदेशश्च** 'अग्ने नय' इत्यस्या ऋच अग्निदेवताप्रकाशकत्वेन लिङ्गेन 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्यत्र उपदेशः **च एव तत्** मन्त्रवाक्यम् **अर्थवत्** इति बोधयति । अन्यथा मन्त्रं प्रति देवतात्वं तत्प्रतिपाद्यत्वमन्तरा किं स्यादिति देवतातद्धितानुपपत्तिरेव स्यादिति भावः ॥ ४३ ॥

**ऊहः** ऊहदर्शनमपि मन्त्रवाक्यस्यार्थवत्तां गमयति अन्यथा सौर्ये चरौ 'अग्नये त्वा जुष्टं निर्वपामि' इति मन्त्रे अग्निपदस्थाने सूर्याय इति ऊहः किमिति स्यात् मन्त्राणां विवक्षितार्थत्वे तु तदर्थाभिधाननिबन्धनः ऊहः सिध्यतीति भावः ॥ ४४ ॥

विधिः विधानं व्याख्यानं तदर्थाः शब्दा **विधिशब्दाः** मन्त्रव्याख्यानाय प्रवृत्ता वाक्यशेषाः **च** अपि मन्त्राणां विवक्षितार्थत्वं गमयन्ति । तथा हि दर्शपूर्णमासयोर्गार्हपत्योपस्थाने 'अग्ने गृहपते' इति मन्त्रो विनियुक्तः । तत्र 'शतं हिमा' इति पठ्यते तत्र हिमशब्दार्थः 'शतं हिमा इत्याह शतं त्वा हेमन्तान्धिषीयेति वावैतदाह' इतिब्राह्मणवाक्यं व्याचष्टे । अविवक्षितार्थत्वे व्याख्यानमपार्थकं स्यात् । शतं हिमा इति यद्यजुराह तत् शतं हेमन्तानित्यर्थमेवाह इति तस्यार्थः । एतद्विचारप्रयोजनं तु मीमांसाकौस्तुभे द्रष्टव्यम् ।

अत्रेदमवधेयम् एतावता मन्त्राणामर्थप्रत्यायकत्वसिद्धावपि सा प्रतिपत्तिः प्रयोक्तुः श्रोतुर्वेति संशये प्रयोक्तुरेवेति भाष्यवार्त्तिकारादयः, श्रोतुरेवेति कुतूहलवृत्तिकारः एवं च अर्थज्ञानशून्यस्यापि मन्त्रप्रयोगः सिद्धः परं तु फले किंचिन्न्यूनता अर्थज्ञानसत्त्वे तु 'योऽर्थज्ञ इत्सकलं भद्रमश्नुते' श्रुतेः पूर्णता इति ।

इति जैमिनिसूत्रवृत्तौ प्रभायां प्रथमाध्याये द्वितीयः पादः ।

**इदानीमपौरुषेयाणां स्वाध्यायविध्यध्यापितानां मन्त्राणां धर्मे प्रामाण्यमुत नेति(१) चिन्ता ।**

**तदर्थं किम् अर्थप्रकाशनद्वाराङ्गत्वम् उतोच्चारणद्वारेति ।**

**तत्र मन्त्राणां नार्थप्रापकत्वम् । विधिप्रमानुवादत्वात् । प्रदेशान्तरस्थविध्येकवाक्यत्वाभावेन च न स्तावकत्वम् । अनुष्ठेयार्थस्मारणमपि फलप्रकाशकानुमन्त्रणक्रियमाणानुवादिकरणमन्त्रैकदेशजपमन्त्रसामस्वव्यापकम् । अतः श्रुत्यादिभिरवगताङ्गत्वानां प्रकरणसन्नि-**

---

मयूखः ।

( १ ) चिन्तेति । ननु मन्त्राणामपि अर्थवादधिकरणे एव विचारितत्वात्तद्विचारोऽसंगत इति चेन्न तत्र सामन्यतोऽर्थवत्वमात्रसाधनेन पादार्थविधया प्रामाण्यमात्रं साधितमिदानीमर्थप्रकाशनरूपप्रयोजनविशेषनिरूपणेन शब्दविधयाप्युपयोगलक्षणं प्रामाण्यं साध्यमिति विशेषात् ।

धिपठितानां च स्वरूपेण ग्रहणाग्रहणासम्भवात्प्रकरणोपस्थितस्वरादि-विधिकल्पितपाठद्वारकत्वम्। अत एव येषां प्रकरणे वारद्वयं पाठस्तेषां वारद्वयमुच्चारणं सिध्यति। सिध्यति च हविष्कृदेहीत्यत्र त्रित्वादिनि-यमविधिः। पाठस्य चादृष्टार्थतया मन्त्राणा(ममन्त्राणा)मप्यदृष्टार्थत्वम्। किञ्च-एषामर्थावबोधनद्वाराङ्गत्वे 'उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति 'चतुर्भिरभ्रि(१)मादत्ते' 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधा-नामादत्ते, इत्याद्यङ्गताबोधकविधिवैयर्थ्यापत्तिः(२) अत एषां स्ववा-क्यार्थेऽप्यप्रामाण्यमिति धर्माधर्मप्रामाण्यं दूरापेतमिति।

उच्यते-उच्चारणस्याङ्गत्वेन पुंव्यापारतया मन्त्रव्यापारत्वाभावेन च सर्वत्र द्वारत्वात् अर्थप्रकाशनस्य तु मन्त्रव्यापारतयानुष्ठेयस्तुतिरू-पत्वेनाङ्गतया च द्वारत्वं युक्तम्, एवं च दृष्टार्थत्वं(३), मन्त्राणां च शब्दरू-तया प्रकाशितानामेव स्वार्थबोधकत्वात् पाठस्मरणयोः प्रकाशकत्वेऽपि उपस्थितपाठत्यागे मानाभावात् खादिरादिविधिदर्शनाच्च पाठविशिष्टा-नामेवार्थप्रकाशनद्वाराङ्गत्वावधारणात्।

नचोक्तविधिवैयर्थ्यम्। अध्वर्युकर्तृकत्वप्राप्तिफलकप्रथनविधौ मन्त्रविनियोगस्य यज्ञपतिमेव तत्प्रजया पशुभिश्च प्रथयतीति यज्ञपति-निष्ठप्रथनप्रकाशकमन्त्रकरणकपुरोडाशप्रथनं यज्ञपतिप्रथनतुल्यमिति स्तुत्युपपत्त्यर्थत्वात्, द्वितीयस्य(५) चतुष्ट्वरूपगुणविध्यर्थत्वात् तृती-यस्य(४) गर्दभाभिधानीतो मन्त्रे परिसंख्यार्थत्वात्। अतो मन्त्राणाम-र्थप्रकाशन(६)द्वाराङ्गतयासिद्धं प्रामाण्यम्।

ननु तथापि कीदृशं प्रमितिजनकत्वमिति चेत्, इष्टसाधनया-गदेवतादिविशेष्यकमन्त्रप्रकारकशाब्दबोधजनकतैव मन्त्रविशिष्टं कर्म

---

मयूखः

(१) अभ्रिः स्यात्काष्ठकुद्दालम् इत्यमरः।

(२) वैयर्थ्यापत्तिरिति। सामर्थ्यादेव तत्र तत्र मन्त्राणां विनियोगसिद्धौ पुनस्तेषां क्वचिद्विनियोगकरणं व्यर्थमिति भावः।

(३) दृष्टार्थत्वमिति। यत्र तु जपमन्त्रादौ दृष्टार्थत्वं न सम्भवति तत्र तु अदृष्ट कल्पनेऽपि न दोष इति ध्येयम्।

(४) द्वितीयस्य—चतुर्भिरभ्रिमादत्त इत्यस्य।

(५) तृतीयस्य—इमामगृभ्णन् इत्यस्य।

(६) अर्थप्रकाशनेति। ननु जिज्ञासासूत्रे अध्ययनस्यार्थज्ञानार्थत्वसाधनादिदं पुनरुक्तमिति चेन्न इहैवाध्ययनस्यार्थज्ञानार्थत्वसाधनात् तत्र तु अध्ययनस्यार्थज्ञानार्थत्वं न सम्भवति विध्यसम्भवान्नियमासम्भवाच्चेति विशेषाशङ्कानिराकरणमात्रम्।

कर्तव्यमित्याद्याकारकविधिकल्पनात् । तादृशशाब्दे मन्त्रज्ञानस्येव ज्ञातमन्त्रस्यापि करणत्वादिति मिश्राः।

अर्थप्रकाशनस्याङ्गत्वेनेष्टसाधनत्वावगमादिष्टसाधनप्रकाशनविशेष्यको मन्त्रप्रकाशकशाब्दबोधो जन्यते । इष्टसाधनं प्रकाशनं मन्त्रवादित्यन्ये।

अविसंवादिफलकत्वरूपमेव प्रामाण्यं । मन्त्रादीनां, न प्रमितिकरणत्वरूपं हुंफडादिशब्दे तस्यावश्यकत्वादिति केचित्।

अग्न्यादिदेवताविशिष्टनिर्वापवाक्यार्थप्रमितिजननेनेति वयं प्रतीमः।

एतेन फलप्रकाशकानुमन्त्राणां क्रियमाणानुवादिनामुत्साहाविस्मरणजनकप्रकाशनार्थतया दृष्टार्थत्वं व्याख्यातम् । साम्नस्त्वर्थप्रकाशकगक्षराभिव्यक्त्यर्थत्वेन दृष्टार्थत्वं स्पष्टमेव। तत्रार्थाभिव्यक्तेः स्पष्टार्थत्वं स्तोत्रश्रुत्येत्यन्यदेतत्। एवं सर्वत्राप्यूह्यम्।

इति भाट्टचिन्तामणावर्थवादपादाभिधो द्वितीयः पादः।

---

# प्रथमाध्याये तृतीयः पादः।

## स्मृतिप्रामाण्याधिकरणम्

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥१॥**

**अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥२॥**

## प्रभा

प्रमाणाध्यायेऽस्मिन् प्रथमपादे साक्षाद्धर्मप्रमाणत्वाद्विधिभागस्य द्वितीयपादे तदेकदेशभूतयोरर्थवादमन्त्रभागयोः प्रामाण्यं विचारितम्। इदानीं वेदातिरिक्तधर्मप्रमाणव्यवस्थापनमेतत्पादार्थः वेदातिरिक्तं च धर्मप्रमाणं स्मृतिः शिष्टाचारश्च तत्राचारापेक्षयाभ्यर्हितत्वात्स्मृतिप्रामाण्यं चिन्त्यते—

**धर्मस्य शब्दमूलत्वात्** वेदैकप्रामाणकत्वात् **अशब्दम्** अनुपलभ्यमानवेदमूलकम् 'अष्टकाः कर्तव्याः' इत्यादिस्मृतिवाक्यजातम् **अनपेक्षम्** सम्भावितभ्रान्त्यादिमूलकतया सन्मूलकल्पनापक्षोरहितम् अप्रमाणं स्यात् अनपेक्ष्यमिति पाठे अनादरणीयमित्यर्थः ॥ १ ॥

**सिद्धान्तमाह**—**अपि वा** इति पूर्वपक्षव्यावृत्तिं द्योतयति **अनुमानम्** स्मृतिमूलभूतश्रुत्यनुमापकलिङ्गं स्मृतिः **प्रमाणं स्यात्** स्मृत्या स्वमूलभूता श्रुतिरनुमीयत इति यावत्।

ननु भ्रान्त्यादिमूलकत्वमेव स्मृतेः कुतो नेत्याह—**कर्तृसामान्यात्** प्रत्यक्षवेदमूल-

कस्मृतिविहितकर्मसु अस्मदाद्यनुपलब्धवेदमूलकस्मृतिविहितकर्मसु च तत्कर्तॄणां सकल- वैदिकशिष्टानां समानत्वात् वेदमूलकतयैवोभयविधस्मृत्योस्तैः परिग्रहणं भ्रान्त्यादिमूल- कत्वे नोपपद्यत इति भावः । अत्र अष्टकादिकं कर्मवेदमूलकं वेदमूलकतया वैदिकदृढ- रिगृहीतस्मृतिविहितत्वात् अस्मदादिप्रत्यक्षवेदमूलकस्मृतिविहितप्रपावत् इत्यनुमाना कारो बोध्यः ॥ २ ॥

विध्यर्थवादमन्त्राणां धर्मप्रामाण्यं निरूप्य तन्मात्रमूलकत्वेनोपस्थि- तस्मृत्याचारयोर्निरूप्यत इति(१) प्रसङ्गः । मन्वादिस्मृतिग्रन्थानाम- निबन्धनानां सदाचाराणां च मूलभूतश्रुतिरूपप्रमाणोपस्थापनेन धर्म- प्रमाप्रयोजकत्वं न वा । तदर्थं (तेषां) भ्रान्त्यादिमूलत्वं श्रुतिमूलत्वं वेति चिन्ता ।

तत्रानुपलब्धिनिश्चिताभावानां श्रुतीनां मूलत्वासम्भवात् पौरु- षेयतया भ्रान्त्यादिमूलकत्वसम्भवाच्च न(२) प्रामाण्यमिति चेन्न—

दृश्यमानसकलशिष्टपरिग्रहानुगुणाया मूलकल्पनाया युक्ततया श्रुतिमूलत्वसिद्धेर्बहूनां भ्रान्तिकल्पनापेक्षया श्रुतिकल्पनायां लाघवात्।

न चैवमाचाररूपशिष्टपरिग्रहेण स्मृतिमूलकल्पनम् ः तस्य चाचा- रस्य स्मृतिमूलत्वमित्यन्योन्याश्रय इति वाच्यम् । प्रामाणिकस्य तस्य बाधकाभावात् तेन दृढसकलशिष्टपरिग्रहलिङ्गाकानुमानं तदन्यथा- नुपपत्तिप्रसूतार्थापत्तिर्वा श्रुतिमूलत्वे मानम् । तत्र मन्वादिस्मृतिर्धम- प्रमितिजनिका वेदार्थानुष्ठायिभिरनुष्ठीयमानार्थकत्वात् वेदवत् स्मृ- त्याचारवदिति ।

नन्वासां श्रुतिमूलत्वे उत्पन्नश्रुतिमूलत्वं पठ्यमानश्रुतिमूलत्वं वा स्यात्, तत्र पठ्यमानशाखानाम् "एकविंशतिशाखं तु ऋग्वेदमृषयो विदुः । सहस्राध्वा सामवेदो यजुरेकशताधिकम्(३) । नवधाथर्वणो-

---

मयूखः

( १ ) निरूप्यत इतीति । निरपेक्षतया धर्मप्रमितिजनकत्वाच्चोदनायाः प्रथमं प्रा- माण्यं विचारितम् तदेकवाक्यता तपन्नानामर्थवादीनामित्येवं कृत्स्नस्य वेदस्य प्रामाण्यं विचार्य तन्मूलतया प्रमाणत्वात्स्मृत्यादीनां प्रामाण्यं विचार्यत इत्यर्थः ।

ननु स्मृत्यादीनामपि धर्मप्रमाणत्वे चोदनैव प्रमाणमिति प्रतिज्ञाव्याकोप इति चेन्न तन्मूलत्वेन तदन्तर्भावेण वा स्मृत्यादीनां प्रमाणत्वेऽपि स्वातन्त्र्येण प्रमाण्याभावात् ।

( २ ) भ्रान्त्यादिमूलकत्वेति । यदाहुः प्रायेणानृतवादित्वात्पुंसां भ्रान्त्यादिसम्भ- वात् । चोदनानुपलब्धेश्च श्रद्धामात्रात् प्रमाणता ॥ इति ।

( ३ ) एकशताधिकम्—एकाधिकं शतमित्यर्थः ।

ऽन्ये तु प्राहुः पञ्चदशात्मकम्" इति परिगणनेन शाखोच्छेदासम्भवाद्- त्यन्तसावधानाध्येतृकाणां वाक्योत्सादासम्भवाच्च न तावदाद्यः, स्मृतिप्रणयनवैयर्थ्यापत्तेश्च न द्वितीयः, अतः कथं श्रुतिमूलत्व- मिति चेत्—

एकशाखाध्ययनस्य विहिततयाऽऽलस्यादियुक्तानामपौरुषेया- णामुपायान्तरेण शाखान्तरीयश्रुत्युपलम्भासम्भवादेकशाखागताना- मपि क्रतुपुरुषधर्मत्वनिर्णयस्य न्यायविवेकाभावेनासंभवादर्थवादादिक- लप्यत्वस्य सुतरां ज्ञानासम्भवात्तदर्थतया स्मृतिप्रणयनसार्थक्यात् (१) अतः पठ्यमानश्रुतिमूलत्वम् ।

उपलभ्यन्ते च तथाभूताः श्रुतयः, यथा—"यां जनाः प्रतिनन्द- न्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गलीः" "अष्टकासु राधसे स्वाहा" इत्यष्टकाकर्माङ्गभूतरात्रिदे- वताप्रकाशको मन्त्रः । एष वै संवत्सरस्य पत्नी यदष्टकेत्यर्थवादश्च ।

प्रपादिस्मृतेर्मूलं 'धन्वन्निव प्रपा असी'ति, तटाकादिस्मृतेः 'स्थ- लयोदकं परिगृह्णन्ती'ति अत्र कृत्रिमजलस्थानवाची टाबन्तस्थलशब्दः, शिखाकर्मस्मृतेश्च 'कुमारा विशिखा इवे'ति लिङ्गं, गुर्वनुगमनादीनाम- ग्निप्रकरणे 'अश्वमनु गर्दभं यन्ती'ति विधेः 'तस्माच्छ्रेयांसं पूर्वं तं पा- पीयाननुयातीत्यर्थवादो मूलभूतः, प्रपादीनां च न केवलं दृष्टार्थत्वम् किन्त्वदृष्टार्थत्वमपि, एवं चाध्ययनानिच्छोरपि गुर्वनुगमनादयो धर्मा इति ।

एवं शिष्टाचारस्य(रात्मतुष्ट्योरपि) प्रामाण्यम्, तथाहि—वेदप्रामा- ण्याभ्युपगन्तृत्वं शिष्टत्वम्, इष्टसाधनत्वेन शिष्टप्रवृत्तिविषयत्वं तदाचारत्वम्—तेन वसन्तोत्सवादौ धर्मस्यानुमानम्, यद्यपि शिष्ट प्रवृत्तिविषयत्वस्य न धर्मत्वव्याप्तिर्लौकिकसिद्धा(२) तथापि "धर्मज्ञस- मयः प्रमाणं तद्विदां च स्मृतिशीले" इत्यादिस्मृतिरेव तत्र मानम् ।

---

मयूखः ।

( १ ) स्मृतिप्रणयनेति । अयम्भावः स्मृतिमूलभूता अपि स्मृतयो वेदे पठ्यन्त एव परन्तु काश्चित्क्वचित्कस्यां चिच्छाखायां विप्रकीर्णा इति शाखान्तराध्यायिभिः शाखा- न्तरगतानामनुपलम्भात्तादर्थ्येन सार्थकं स्मृतिप्रणयनं तदुपलम्भेऽपि वा मन्दधीभिरुपसं- हर्तुमशक्यत्वात् उपसंहारार्थं च स्मृतिप्रणयनमिति ।

( २ ) लोकसिद्धेति । विश्वामित्रस्य चाण्डालयाजनं वसिष्ठस्य पुत्रशोकार्तस्य ज- लप्रवेशादात्मत्यागसाहसं लौकिके दृष्टं तत्र च धर्मत्वाभावाद्व्यभिचारेण व्याप्तिग्रहासम्भ- वादिति भावः । अधिकं तु वार्तिके द्रष्टव्यम् ।

तस्याश्च स्वतः प्रामाण्यायोगात् तन्मूलभूतश्रुत्यनुभवो मन्वादेः क॰ल्प्यते' सा च श्रुतिः-'सदाचारविषयो धर्म' इत्येवं रूपैका, एकैकतत्त॰द्विषया नाना वेत्यन्यदेतत् । अत एव शिष्टाचारस्य स्मृत्यपेक्षया दौर्बल्यं(१) वक्ष्यते ।

एवं शिष्टात्मतुष्ट्या अपि(२), 'यथा गर्भाष्टमेऽष्टमे वाब्दे' इत्यादि विकल्पविषयेषु सन्दिग्धार्थनिर्णायकतया भोजनव्यतिरेकेण जलपाना भावे चोत्कटेच्छाविषयतया धर्मत्वानुमानम् , इच्छाविषयत्वस्य च तद्धर्मत्वव्याप्तिर्लोके सिद्धेति'आत्मनस्तुष्टिरेव च' इत्यादिस्मृतिरेव तत्र मानम् , तस्याश्च पूर्ववदेव प्रातिस्विकश्रुतिमूलत्वं 'यदेव किञ्च-'नानू॰चानोऽभ्यूहत्यार्षं तद्भवती'ति प्रत्यक्षश्रुतिर्वा मूलमित्यन्यदेतत् , तस्मात्सिद्धं स्मृत्यादीनां प्रामाण्यम् ।

## विरोधाधिकरणम् ।

### विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥

### हेतुदर्शनाच्च ॥ ४ ॥

प्रभा ।

'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुत्या'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतेः विरोधे सति तु प्रत्यक्षश्रुतिविरुद्धस्मृतिरूपम् अनपेक्षं सन्मूलानपेक्षं सदप्रमाणम् वि॰रोधे असति हि अनुमानं स्मृतेः सन्मूलकल्पकमनुमानं प्रवर्तते ॥ ३ ॥

श्रुतिविरुद्धस्मृतिषु हेतुदर्शनात् वस्त्रलाभलोभमूलकत्वस्य दृष्टस्यैव हेतोर्दर्शनात् च अपि न श्रुतिमूलकल्पनेत्यप्रमाणमेवंजातीयका स्मृतिरिति भावः ॥ ४ ॥

औदुम्बरीं स्पृष्ट्वोद्गायेदित्यादिप्रत्यक्षश्रुतिविरुद्धाना(३)मौदुम्बरी

---

मयूखः ।

( १ ) दौर्बल्यमिति । यदाहुः—आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् । तेन ह्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते ॥ इति ।

( २ ) शिष्टात्मतुष्ट्येति । यद्यपि श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्सङ्कल्पजः कामो धर्ममूलमिति स्मृतम् ॥ इति स्मृतिवचने स्वस्य च प्रियमात्मन इत्येवोक्तं न तु शिष्टात्मतुष्टिस्तथापि तत्रैव तत्तात्पर्यमवसेयम् । यदाहुर्वार्तिककारपादाः— एवं च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् । सतां हि सन्देहपदेषु वस्तुषु प्रामाणमन्तः करणप्रवृत्तयः ॥ इति । स्मृतिकाराश्च 'आचारश्चैव साधूनां देशजातिकुल॰धर्माश्चाम्नायैरविरुद्धाः प्रमाणम्' इति वदन्ति ॥

( ३ ) शिष्टत्रैवर्णिकपरिगृहीतत्वादष्टकादिस्मृतीनां श्रुतिमूलकत्वमाश्रितम् तथा प्रत्य॰क्षश्रुतिविरोधेऽपि शिष्टत्रैवर्णिकपरिगृहीतत्वसामान्यात् श्रुतिमूलत्वमेवास्तु इति उत्सूत्रपूर्व

सर्वा वेष्टयितव्येत्यादिस्मृतीना(१)मप्युक्तहेतुनै(२)वोक्तरूपं प्रामाण्यमस्त्विति चेन्न;

विरुद्धप्रत्यक्षश्रुतिदर्शनेन त्वगिन्द्रियजन्यज्ञानविषयत्वरूपेणौदुम्बर्याः परिच्छिन्नतया रूपान्तरवेष्टनाद्याकाङ्क्षाया अभावेन सत्यप्यनुमापके मूलश्रुतिकल्पनाया (३)असम्भवाल्लिङ्गकल्प्यश्रुतिवत्(४) तेनात्र कल्पनामूलोच्छेदकृतो(५) बाधः ।

न च कल्पनामूलं स्मृतेर्मूलाकाङ्क्षास्तीति वाच्यम्, तत्सत्त्वेऽपि रूपान्तरजिज्ञासाया अभावादनुमितिमात्रे जिज्ञासाया हेतुत्वात् । एतेन परम्परास्पर्शनाविरोधः परास्तः।

न चैवं चाण्डालस्पर्शनैमित्तिकस्नानविधावपि परम्परास्पर्शस्य निमित्तत्वाभावापत्तिः, तत्स्पृष्टस्पर्शिनामपि स्नानाम्नानात्, न चेदं पुण्य-

मयूखः ।

पक्षे 'विरोधे त्वनपेक्षमि'ति सिद्धान्तसूत्रगततुशब्दनिरसनीयेनाधिकरणविचारं दर्शयितुमुदाहरणमाह—प्रत्यक्षश्रुतिविरुद्धानामिति । यथा मन्वादिस्मृतीनां प्रामाण्यं तथा विरुद्धानामपि प्रामाण्यमित्याक्षेपनिरासेनापावादिकी संगतिरत्र बोध्या ।

सदो मण्डपे उदुम्बरवृक्षस्य काष्ठमूर्ध्वतया यजमानसंमितं निखन्य स्थाप्यते तत् औदुम्बरी ।

( १ ) आदिस्मृतीनामिति । आदिपदेन—जातपुत्रः कृष्णकेशोऽग्नीनादधीत इति श्रुतिविरुद्धा अष्टाचत्वारिंशद्वर्षपर्यन्तं वेदब्रह्मचर्यम् इति स्मृतिः अग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यमितिश्रुतिविरुद्धा क्रीतराजको भोज्यान्न इति स्मृतिर्गृह्यते ।

( २ ) उक्तहेतुनेति । शिष्टत्रैवर्णिकपरिगृहीतत्वहेतुनेत्यर्थः । नन्वत्र प्रत्यक्षश्रुतिविरोधस्य श्रुतिमूलकत्वाभावसाधकस्य सत्वान्मन्वादिस्मृतिषु च तदभावान्न तद्वदासां श्रुतिमूलकत्वं किन्तु भ्रान्तिमूलकत्वं लोभमूलकत्वं वेति चेन्न ग्रहणाग्रहणादिश्रुतीनां दर्शनेन प्रत्यक्षश्रुतिविरोधस्य व्यभिचरितत्वेन श्रुतिमूलकत्वाभावसाधकत्वायोगात् । तथा च विकल्पेन सर्ववेष्टनं स्पर्शनं च स्यादिति पूर्वपक्षिणोऽभिप्रायः ।

( ३ ) असम्भवादिति । अनुमाने ऽनुमेयजिज्ञासा कारणम् इति प्रत्यक्षश्रुत्या स्पर्शविधानेनावेष्टितत्वरूपेणौदुम्बर्याः परिच्छिन्नत्वाज्जिज्ञासाभावेन नौदुम्बरीवेष्टनविषयकश्रुत्यनुमानसम्भव इति भावः ।

( ४ ) श्रुतिवदिति । यथा प्रत्यक्षया 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या आकाङ्क्षानिवृत्त्या इन्द्रप्रकाशनसामर्थ्यरूपलिङ्गेन 'ऐन्द्या इन्द्रमुपतिष्ठत' इति श्रुतेर्नानुमानं तद्वत्प्रत्यक्षश्रुत्या वेष्टनस्मृतेर्बाध इति भावः ।

( ५ ) कल्पनामूलेति । कल्पनामूलमाकाङ्क्षा तस्या उच्छेदः शान्तिः तत्कृतो बाधः मूलभूतश्रुत्यकल्पनमित्यर्थः ।

परम्, सचेलस्नानविधिनैव वस्त्रादेरपि तत्स्पृष्टस्याशुचित्वकल्पनात्। अत एव न तत्स्पृष्टस्य गवादेरशुचित्वम्। प्रक्षालनास्नानाभावादित्यन्यदेतत्। तत्सिद्धं कल्पनामूलोच्छेदेन विरुद्धस्मृतीनां न श्रुतिमूलत्वम्, अयमेव बाधप्रकारः-सामान्यविशेषातिदेशोपदेशादावूहनीयः।

अन्योऽपीह प्रमेयापहारनिबन्धनो बाधः, स च परस्परात्यन्ताभावसमानाधिकरणयोरन्यतरनिर्णयेनान्यानुमित्यसम्भवरूपः। यथा वह्नेरौष्ण्येन शैत्यस्य, एवं वेष्टनस्पर्शनयोः श्रौतस्पर्शज्ञाने वेष्टनरूपप्रमेयबाध इत्याहुः।

सामान्यविशेषादौ प्रमेयापहारनिबन्धनः श्रुतिलिङ्गादौ कल्पनामूलोच्छेदकृत इत्यपरे।

अतः श्रुतिमूलत्वासम्भवात्किञ्चिन्मूलं कल्प्यम्। तच्च वेष्टनस्मृतेर्वस्त्रलोभः जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति श्रुतिविरुद्धाष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्मृतेर्नपुंसकत्वप्रच्छादनम्, हुतायामग्नीषोमीयस्य वपायामशितव्यमिति श्रुतिविरुद्धाया क्रीतराजको भोज्यान्न इति स्मृतेर्बुभुक्षा।

न चात्र विकल्पाङ्गीकरणं युक्तम्, अष्टदोषयुक्तत्वात् तथा हि इष्टार्थत्वेन निरपेक्षसाधनत्वेन वावगतयोर्व्रीहियवयोर्व्रीह्यनुष्ठानवेलायां यवविषयकविधौ क्लृप्तप्रामाण्यत्यागप्रमाजनकत्वाभावरूपाप्रामाण्यकल्पनं चोपलभ्यमानं चापलभ्यमाने प्रामाण्येऽनुपलम्भभावेनाप्रमाणिकम्।

एवं द्वौ दोषौ यवशास्त्रनिष्ठौ, ततो यवानुष्ठानवेलायां त्यक्तप्रामाण्यजीवनं कल्पिताप्रामाण्यत्यागश्चेति यवशास्त्रनिष्ठा एव चत्वारो दोषाः। एवं व्रीहिशास्त्रनिष्ठौ अपीत्यष्टौ, तदुक्तं—

प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पनम्।
प्रत्युज्जीवनहानाभ्यामेवं(१) स्यादष्टदोषता॥

वस्तुतो दोषचतुष्टयमेव सम्यक्, न चैतयोः प्रयोगविधिना समुच्चयसम्भवः, तस्य विनियोगविध्युपजीवकतया कल्प्यतया विलम्बितप्रवृत्तिकतया च दुर्बलत्वात्, तुल्यबलविरोधे चागत्या तदङ्गीकारात् अत्र सापेक्षस्मृत्या निरपेक्षश्रुतेः पाक्षिकाप्रामाण्यकल्पनासम्भवाज्जिज्ञासां विना मूलश्रुत्यनुमानानुदयाच्च न तदङ्गीकारः, अतोऽप्रामाण्यं श्रुतिविरुद्धस्मृतीनाम्।

---

(१) जिज्ञासाया इति। सिषाधयिषामात्रं पक्षता इति वादिनो मतेनेदम्।

(२) प्रत्युज्जीवनं-त्यक्तस्य स्वीकारः। हानं-स्वीकृतस्य त्यागः।

यत्तु(१)श्रुत्यविरुद्धानां वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णातीत्यादीनामपि लोभमूलकत्वेनाप्रामाण्यं भाष्यकारेणोक्तं; तत्सर्वस्मृतीनामप्रामाण्यापत्ते(२)श्चिन्त्यम् ।

वार्तिककारस्तु—न प्रत्यक्षश्रुतिविरुद्धानामप्यप्रामाण्यम् , विरुद्धस्मृतिमूलश्रुत्यभावनिश्चयासम्भवात्(३), स च द्वेधा साधकाभावाद्बाधकसद्भावाद्वा, नाद्यः—शिष्टपरिग्रहस्य सत्वात् , न च जिज्ञासा साधिका । अजिज्ञासितस्यापि वह्नेरनुमित्युदयात् किमियं स्मृतिः प्रमाणं न वेति जिज्ञासासम्भवाच्च, अतो न साधकाभावः, नापि बाधकसद्भावः । तदपि किं विरुद्धश्रुतिदर्शनं मूलादर्शनं वा विरुद्धश्रुतीनां बहुशो दर्शनात् । नाद्यः सर्वशाखोपलम्भाभावात् । न द्वितीयः । न हि स्वाप्रत्यक्षेण श्रुत्यभावनिश्चयः । शाखान्तरविहितपदार्थसमुच्चयस्यानुपपत्तेः । अतो न मूलाभावसम्भवः। किञ्च—व्यवस्था(४)कल्पनयाऽविरो·

---

मयूखः ।

( १ ) विरोधे त्वनपेक्षमिति न्यायेन श्रुतिविरोधभग्नप्रसरायां स्मृतौ श्रुत्यनुमानप्रतिबन्धादाकाङ्क्षितं मूलान्तरं प्रदर्शयितुं हेतुदर्शनाच्चेति सूत्रं पूर्वाधिकरणशेषतया व्याख्याय श्रुतिविरुद्धत्वरूपहेतुनैव बलवता बाधसिद्धावन्वाचयहेतुर्नातीव प्रयोजनवानित्यपरितोषात् हेतुदर्शनाच्चेति अधिकरणान्तरं प्रत्यक्षश्रुत्यविरुद्धानामपि दृष्टलोभमूलिकानां वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णातीत्यादीनामप्रामाण्यसाधनायारचितं भाष्यकृता तद्दूषयितुमनुवदति यत्त्विति ।

( २ ) चिन्त्यमिति । अविरुद्धानामपि लोभमूलकत्वकल्पने दानादिस्मृतेरपि तदापत्त्याऽप्रामाण्यापत्तिरित्यर्थः । किं च अपि वा कारणाग्रहणे इत्यधिकरणे दृष्टमूलासम्भवमात्रेणाचारप्रामाण्यं न· साधितमपि तु धर्मबुद्ध्यानुष्ठीयमानत्वेनैव अन्वाचयहेतुमात्रं तु दृष्टमूलासम्भव उपन्यस्त इति भावः ।

( ३ ) निश्चयासम्भवादिति । वस्तुतस्तु सर्ववेष्टनस्मरणं छान्दोग्यानुपदे ग्रन्थे 'वैष्टुतं वै वासः श्रीर्वासः श्रीः सामेति स्तोत्रीयापरिगणनार्थानामौदुम्बरीणां प्रादेशमात्राणां कुशानां स्थापनार्थं वास उक्त्वा औदुम्बरीवेष्टनवाससोऽपि तामूर्ध्वदेशेन परिवेष्टयतीति शाट्यायनशाखाब्राह्मणगतप्रत्यक्षश्रुतिमूलमिति जैमिनिनोक्तम् । तथा च—

ततश्च श्रुतिमूलत्वाद्बाध्योदाहरणं न तत् ।
विकल्प एव हि न्याय्यस्तुल्यकक्षप्रमाणतः ॥ इति ।

वार्तिकम् ।

( ४ ) व्यवस्थेति । सा चेत्थम्—वेष्टनस्पर्शनयोरात्मीयपरकीयप्रत्यक्षश्रुतिसिद्धयोः 'आत्मीयात्परकीयस्य दौर्बल्यं न कथंचन । प्रत्यक्षत्वाविशेषेण स्वप्रत्यक्षसमं हि

घसम्भवेनावश्यं विरोधेनाप्रामाण्यं युक्तम् , सा च सर्वपदाश्रय, [वार्तिककारस्तु न जिज्ञासाया अनुमित्यङ्गत्वमन्यथाद्यजिज्ञासायामपि तदुदयात् सत्यपि वा तस्याः कारणत्वे अनुमितिविषयश्रुतेर्जिज्ञासितत्वाच्च प्रत्यक्षश्रुतिविरोधाभावेऽपि लोभादिमूलकल्पाङ्गीकारे च अष्टकादिस्मृतेरपि तदापत्तेः, अतश्च प्रत्यक्षश्रुतिविरोधेऽपि स्मृतेः शिष्टत्रैवर्णिकपरिग्रहाविशेषेण श्रुतिमूलकल्पकत्वनोपपत्तेर्युक्तमेव प्रामाण्यम् परन्तु यावच्छ्रुतिदर्शनं वेष्टनं नानुष्ठेयमर्थवादाद्युन्नीत विधिमूलकत्वस्यापि स्मृतिषु दर्शनेन प्रकृतेऽपि तन्मूलकत्वस्य सम्भावितत्वात् तस्य चोन्नयनस्य प्रत्यक्षश्रुतिविरोधे आभासत्वसम्भवात् अतश्च यावच्छ्रुतिदर्शनम् अननुष्ठानलक्षणमप्रामाण्यमित्याभिप्रायं सूत्रमिति प्राह ।

यद्वा शाक्यादीनामपि क्षत्रियत्वप्रसिद्धेर्वेददर्शनसम्भवेन तत्प्रणीतस्मृतीनामपि वेदमूलकत्वं तन्मूलभूतवेदश्चेदानीं प्रलीन इति प्राप्ते–शिष्टत्रैवर्णिकानां धर्मत्वेन परिग्रहस्य पूर्वाधिकरणमुख्यहेतोरभावात् प्रत्युताप्रमाणत्वेनैव तेषां स्मरणाद्वेदाप्रामाण्यवादिभिरेव च तत्प्रामाण्यस्वीकाराद्वेदमूलकत्वकल्पनानुपपत्तेरप्रामाण्यमिति सूत्रार्थः ।

## शिष्टाकोपाधिकरणम् ।

**शिष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वात् ॥५॥**
**अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ६ ॥**

प्रभा ।

शिष्टाकोपे शिष्टानां वेद कृत्वा वेदिं करोतीत्यादिश्रुत्या विहितानामकोपेऽविरोधे **अविरुद्धम्** क्षुते आचामेत् इत्यादिस्मृतिवचनं प्रमाणमिति **चेन्न शास्त्रपरिमाणत्वात्**

---

मयूखः ।

तत्' इतिरीत्या तुल्यत्वेऽपि आत्मीयप्रत्ययस्य विश्रम्भणीयत्वात् परप्रत्ययस्यादृष्टमूलस्य न्यायाभासमूलत्वसम्भवात् स्वप्रत्यक्षश्रुतिविहितस्यैवानुष्ठानं न तु परप्रत्यक्षश्रुतिविहितस्येत्यननुष्ठानलक्षणमप्रामाण्यं वेष्टनस्मृतेः नतु सर्वथाऽप्रामाण्यम् तदुक्तं–यावदेकं श्रुतौ कर्म स्मृतौ चान्यत् प्रतीयत । तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते ॥ इति । तेन अननुष्ठापकत्वलक्षणमेवाप्रामाण्यं श्रुतिविरुद्धस्मृतीनां न तु बाधितार्थकत्वलक्षणम् इति ।

सूत्रार्थस्तु–श्रुतिस्मृत्योर्विरोधे यत्प्रमाणान्तरानपेक्षं श्रुतिवाक्यं तदेव ग्राह्यमसति ह्यात्मप्रत्यये परप्रत्ययानुमानक्लेशाश्रयणामिति ।

---

* इतआरभ्य भाट्टचिन्तामणे. सप्ततिश्लोकमितो ग्रन्थस्त्रुटित इति भाट्टदीपिकाग्रन्थः [ ] एतादृशरेखामध्यस्थो वेदितव्यः ।

शास्त्रेण क्रमबोधकश्रुत्या अवगतं यत्परिमाणं वेदकरणवेदिकरणयोरव्यवहितकालसम्बन्धरूपं तत्वात् श्रुतिविरोधेनाप्रमाणमुदाहृतस्मृतिरिति पूर्वपक्षः ॥ ५ ॥

सिद्धान्तमाह—अपि वा कारणाग्रहणे अप्रामाण्यकारणानां श्रुतिविरोधस्य स्मृतिषु लोभादीनां तत्तत्स्मृतिकारेषु च अदर्शने सति प्रयुक्तानि स्मृतिबोधिताम्याचमनादीनि पदार्थरूपतया तद्धर्मक्रमापेक्षया प्रबलानि प्रतीयेरन् तथा च नाप्रमाणमुदाहृतस्मृतिः । न च क्त्वाप्रत्ययेनाव्यवधानोपस्थानात् मध्ये क्षुन्निमित्तकाचमनानुष्ठाने श्रुतिविरोध इति वाच्यम् , क्त्वाप्रत्ययेन पूर्वकालत्वप्रत्यायनेऽपि अव्यधानप्रत्यायनाभावेन तद्विरोधाभावात् ॥ ६ ॥

स्मार्तानामाचमानादीनां श्रौतैः क्रमकालपरिमाणादिभिर्विरोधे श्रौतत्वात्क्रमादीनामेव प्राबल्यात्तद्विषयस्मृतीनामप्रामाण्यम् , न हि 'क्षुते आचामेत्' इति विहितस्य स्मार्ताचमनस्य वेदवेदिकरणमध्येऽनुष्ठाने 'वेदं कृत्वा वेदिं करोति' इति श्रुतिबोधितः क्रमोऽनुष्ठातुं शक्यते स्मार्तपदार्थानां च बहुत्वात्पूर्वाह्णादिः कालः प्रयोगविध्यवगतं च परिमाणं न शक्यतेऽनुग्रहीतुम् , न च श्रौतत्वेऽपि क्रमादेः पदार्थधर्मत्वात् पदार्थभूतेभ्यः आचमनादिभ्यो दौर्बल्यं प्रमाणपूर्वकत्वात्प्रमेयावगमस्य प्रथमावगतप्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य दौर्बल्यादिति प्राप्ते—

पदार्थप्राप्त्यपेक्षत्वात् क्रमादेरुत्तरकालिकस्य यावत्प्रमाणगम्यपदार्थाविरोधेनैव कल्पनीयत्वाच्च तावत्पदार्थविरोधित्वम् परिमाणं तु न कस्यचिच्छास्त्रस्यार्थः इति न तस्य श्रौतत्वम् विरोधेऽपि आचमानादीनां पदार्थत्वात् प्राबल्यमेव, प्रमाणानां हि न स्वरूपतो विरोधोऽपि तु प्रमेयविरोधनिबन्धनः, यदैव प्रमेयविरोध अलोच्यते तदैव तद्गतेन बलाबलेन निर्णीते शास्त्रार्थे न प्रमाणबलाबलस्य नियामकमिति प्रमाणमेव तत्स्मृतिः ।

यद्वा(१) यच्छाक्यादिग्रन्थेषु वेदाविरुद्धं दानादिवचनं तस्य भवतु प्रामाण्यमिति प्राप्ते—

'स्वाध्यायोऽध्येतव्यः' 'वेदोऽखिलो धर्ममूलं तद्विदां च स्मृतिशीले' 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश' इत्यादिवचनैर्नियतप्रमाणप्रातिपा·

---

मयूखः ।

(१) शिष्टाकोपमिति सूत्रं वर्णकान्तरेण व्याचष्टे यद्वेति । यद्धि शाक्यवचनं श्रुतिस्मृतिशिष्टं न कोपयति तत्प्रमाणं भवत्विति चेन्न शास्त्रस्य पुराणन्यायेत्यादिना परिच्छिन्नत्वादिति सूत्रार्थः ।

ष्ठानामेव धर्मत्वप्रमितेरन्यतः प्रमितस्य फलसाधनत्वाभावात् तेषामप्रामाण्यमिति ।

## आचारप्रामाण्याधिकरणम् ।

अनिबद्धानां (२)वसन्तोत्सवाद्याचाराणां प्रमाण्यमप्रामाण्यं वेति सन्देहे एतेषां वेदमूलत्वेऽष्टकादिवन्मन्वादिभिर्निबन्धनापत्तेः सामान्यतस्तद्विदां च स्मृतिशीले इत्यादिना निबन्धनेऽपि विशेषतोऽनिबन्धनेन तेषां श्रुतिदर्शनाभावादप्रामाण्यमिति प्राप्ते—

धर्मबुद्ध्या वैदिकैरनुष्ठीयमानत्वात्स्मृतिवदेव वैदिकत्वम् विशेषतोऽनिबन्धनं तु गौरवाभीत्या न दोषः, व्यतिक्रमसाहसदर्शनं तु धर्मबुद्ध्या वैदिकैरननुष्ठीयमानत्वात् न वैदिकम् न चैतावता सर्वस्याप्यवैदिकत्वम् , अत आचाराणामपि धर्माधर्मयोः प्रामाण्यम् । ]

## आर्यप्रसिद्धिनियामकताधिकरणम् ।

**तेष्वदर्शनाद्विरोधस्यसमा विप्रतिपत्तिः स्यात् ॥ ७ ॥**

**शास्त्रस्था वातन्निमित्तत्वात् ॥ ८ ॥**

### प्रभा ।

तेषु यवादिशब्दार्थेषु आर्यानार्यप्रसिद्धेषु विप्रतिपत्तिः विशिष्टा प्रतिपत्तिः अर्थावगतिः समा तुल्या स्यात् विरोधस्य एकतरबाधहेतोः प्रबलदुर्बलभावस्य अदर्शनात् तथा च आर्यैः यज्ञे स्वप्रसिद्ध्या दीर्घशूकः अनार्यैः स्वप्रसिद्ध्या कङ्गुश्च व्यवस्थया गृह्येतेति भावः ॥ ७ ॥

शास्त्रस्था वा वेदशास्त्रानुसारिणां या प्रतिपत्तिः सा प्रबला तेषां प्रतिपत्तेः तन्निमित्तत्वात् वेदमूलकत्वादित्यर्थः ॥ ८ ॥

* [ स्मृत्यधिकरणसिद्धस्मृत्याचारप्रामाण्यस्य विरोधाधिकरणेनापोदितस्य शिष्टाकोपाधिकरणे प्रतिप्रसवकरणेनाचारप्रामाण्यस्यापि प्रस्तुतत्वादनन्तरसङ्गतिमभिप्रेत्य भाष्यकृता यत्र—यवमयश्चरुः, वाराही उपानहौ, वैतसे कटे प्राजापत्यान् सञ्चिनोति, इत्यादौ यववराहवैतस

---

### मयूखः ।

( २ ) अपिवेति सूत्रमधिकरणान्तरपरतया व्याचष्टे अनिबन्धनानामिति । वसन्तोत्सवाद्यनुष्ठातॄणां विप्रलिप्सादिरूपाप्रामाण्यकारणाग्रहणे प्रयुक्तानि कर्तव्यानीति प्रतीयेरन्नित्यर्थः

---

* भाट्टचिंतामणौ भाष्यकृन्मतस्योपन्यासात् भाट्टदीपिकायां चानुपन्यासात् तथैव निर्माय भाष्यकृन्मतं [ ] एतादृशरेखामध्ये निवेशितम् ।

शब्दानामर्थप्रयोगाचारविप्रतिपत्तिः यथा बहुभिर्यवादिशब्दाः प्रियङ्गु-वायस-जम्बूवृक्षेषु बहुभिश्च दीर्घशूक-सूकर-वञ्जुलेषु प्रयुज्यन्ते तत्र प्रयोगप्रत्यययोरुभयत्राविशेषात् उभयत्र वाचकत्वकल्पनयाऽविशेषादुभयस्य विकल्पेन ग्रहणमिति पूर्वपक्षे—अनेकत्र शक्तिकल्पने गौरवादेकत्र शक्तिरपरत्र गौणी तत्र वाक्यशेषबलेन यवादिपदानां दीर्घशूकादौ शक्तिः प्रियङ्ग्वादौ लक्षणेति वाक्यशेषानुगृहीतार्यप्रसिद्धिरेव बलीयसीति सिद्धान्तितम्। ]

(१)शक्तिशक्तिद्वयेन युगपद्बोधो वेत्यन्यदेतत्, यवमानयेत्यादौ सन्देहापत्तिः, विकल्पस्तूक्तदोषः—अतो यत्रार्थानां विरोधस्तत्र वाक्यशेषानुगुणप्रसिद्धिप्रयोगरूपाचारस्य धर्मत्वं, सन्ति चात्र वाक्यशेषाः 'यदा वा अन्या ओषधयो म्लायन्तेऽथैते मोदमाना इवोत्तिष्ठन्ति' इति 'यवमयीभिरद्भिः रौद्रं चरुं प्रोक्षती'ति विधे'र्यवमयानि करम्भपात्राणि भवन्ती'ति विधेर्वा शेषः 'वराहं गावोऽनुधावन्ति' 'अप्सुजो वेतस' इत्याद्याः, एतैश्चात्र शक्तिश्च (बोध्यते) यद्वाक्यशेषानुगुणाचारस्य बलीयस्त्वम्।

वार्तिककारमतेनाधिकरणस्वरूपनिरूपणम् ।

आचार्यस्तु(२)-नत्वेवमधिकरणं 'सन्दिग्धेषु वाक्यशेषादि'त्याधिकरणेनास्यानेन वा तस्य पौनरुक्त्यापत्तेः, अतः पिकनेमाधिकरणवक्ष्यमाणसमानतया म्लेच्छप्रसिद्धेरार्यप्रसिद्धिविरोधे किं तुल्यत्वमुत दौर्बल्यमिति चिन्ता ।

ननु पीलुशब्दस्य 'पैलवौदुम्बरौ दण्डौ वैश्यस्ये'ति गौतमस्मृतौ वृक्षविशेषे प्रयुज्यमानस्य म्लेच्छैर्हस्तिनि प्रयुज्यमानस्य प्रयोगप्रत्ययाविशेषेणोभयत्र शक्तिरिति चेन्न—

पूर्वोक्तानेकशक्तिकल्पनाद्यापत्तेः म्लेच्छप्रयोगस्य भ्रान्त्याप्युपपत्तेः, न च विनिगमकाभावः, शब्दैकसमधिगम्यधर्माधर्मजिज्ञासया

---

मयूखः ।

( १ ) इतो भाट्टचिन्तामणिग्रन्थः ।

( २ ) आचार्यस्त्विति । वार्तिककारस्त्वित्यर्थः । अयं भावः 'सारस्वतं मेषम्' इत्यत्र 'वाग्वै सरस्वती' इति वाक्यशेषेण सरस्वतीशब्दप्रकृतिनिर्णयस्येव यवादिशब्देष्वपि वाक्यशेषादेवार्थनिर्णये इदमधिकरणं 'संदिग्धेषु वाक्यशेषादि'त्यधिकरणेन गतार्थं स्यात् किञ्च वाक्यशेषाभावेऽभियुक्तानभियुक्तप्रसिद्ध्योस्तुल्यबलत्वापातश्चेतिभाष्यकारीयाधिकरणरचनाऽयुक्तेतिमत्वा पिकनेमाधिकरणे वक्ष्यमाणम्लेच्छप्रयोगाचारप्रामाण्यालोचनेन प्रासङ्गिकीं सङ्गतिमभिसन्धायार्यम्लेच्छविप्रतिपत्तिविषयशब्दप्रयोगरूपाचारोदाहरणेनापि आर्यप्रसिद्धेर्बलीयस्त्वं सिद्धान्तनीयमिति ।

शब्दार्थाविप्लुतिसिद्धावभियोगप्रयोगविशेषस्यैव नियामकत्वात् । दृष्टार्थव्यवहारमात्रप्रयोजनकेषु म्लेच्छेषु तदभावात्। अत(१) आर्य-प्रसिद्धिविरोधे म्लेच्छप्रसिद्धिर्दुर्बलेति ।

## स्मृतिविरुद्धाचाराप्रामाण्यपरं द्वितीयं वर्णकम् ।

प्रभा ।

यद्वा तेषु स्मृतिविरुद्धाचारपरिगृहीतेषु मातुलसुतापरिणयादिषु **विप्रतिपत्तिः** धर्मत्वावगतिः **समा स्यात्** स्मृत्याचारयोरुभयोरपि श्रुतिमूलकत्वाविशेषेण **विरोधस्य** प्रबलदुर्बलभावस्य **अदर्शनात्** ॥ ७ ॥

**शास्त्रस्था वा** विधिप्रत्ययघटितस्मृतिवाक्यानुसारिणी प्रतिपत्तिर्बलीयसी आचार-स्य **तन्निमित्तत्वात्** स्मृतिकल्पकत्वात् ॥ ८ ॥

यद्वा **स्मृतिविरुद्धाचारस्य दौर्बल्यं प्रतिपाद्यते ।**

ननु—

"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥"

इति स्मृतिविरुद्धस्याचारस्यापि शिष्टपरिग्रहादाद्यनयेन(२) स्मृतिव-न्मूलश्रुतिकल्पकतया तुल्यत्वेनानुष्ठानात्मकस्याचारस्याननुष्ठानरूपबा-धासम्भवेन वाक्यात्मकतया यथाश्रुतार्थत्यागलक्षणबाधासम्भवेन च स्मृतितो बलीयस्त्वम् , न च मिथ्यात्वरूपबाधस्य खपुष्पायमाणत्वा, त्प्रामाण्यमिति चेन्न—

अर्वाचीनाचारस्य स्मृतिमूलकत्वकल्पनायां स्मृतिविरोधस्य प्रतिबन्धकत्वात् । न च मन्वादीनामीदृशाचार उपलभ्यते(३) ये

---

मयूखः ।

( १ ) अत इति । असत्यपि वाक्यशेषे न क्षतिः । यत्र तु अभियुक्तयोरेवोभयत्र प्रयोगस्तत्र वाक्यशेषस्य नियामकतेत्यर्थः ।

( २ ) आद्यनयेन—स्मृतिप्रामाण्याधिकरणेनेत्यर्थः ।

( ३ ) उपलभ्येत इति । ननु 'आयाहीन्द्रपथिभिरीडितेभिर्यज्ञमिमं नो भागधेयं जु-षस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव' (ऋ. सं. प. ५-४-२३) इति मन्त्रेण हेइन्द्र ईडितेभिः प्रशस्तैर्मार्गैर्नोऽस्माकमिमं यज्ञमायाहि तृप्तामाज्यसिक्तां वपां स्वीयं भागधेयं जुषस्व यथा मातुलस्य जहुरपत्यमर्थात् भागिनेयस्य योषा स्त्रीरूपत्वेन भागः यथा पैतृष्वसेयी अर्थान्मातुलपुत्रस्य भागः तथा तव वपेत्यर्थकेन मातुलकन्यापैतृष्व-स्रेयीपरिणयविध्यनुमानात् प्रत्यक्षश्रुतलिङ्गमूलकाचारस्य शिष्टस्मृतिविरोधोऽकिञ्चित्कर इति चेन्न—योऽयं श्रौतलिङ्गनिमित्तो विधिः स किं नियमविधिरूपः ऋतौ भार्यामुपेयादितिवत् अभ्यनुज्ञाविधिरूपो वा नाद्यः 'ऋतुस्नातां योभार्यां सन्निधौ नोपयच्छति । घोरायां भ्रूणहत्यायां

न स्मृतिकल्पना स्यात्, आचार्यवचः प्रमाणमित्यादिवेदावधारितसत्यवचस्तया मन्वादिप्रणीतस्मृतेराचारविरोधे मूलस्मृतिकल्पनाप्रतिबन्धस्य वक्तुमशक्यत्वाच्च।

किञ्च—अर्वाचीनानां शाखान्तरप्रकरणान्तरगतविप्रकीर्णश्रुत्युपलम्भासम्भवात्तदाचारेण न साक्षाच्छ्रुतिकल्पनं संभवति किन्तु तैर्वृद्धमन्वाद्याचारकल्पनद्वारा तन्मूलभूतस्मृतिद्वारा न मूलश्रुतिः कल्प्येति लिङ्गवाक्ययोरिव तद्वदेवार्थविप्रकर्षेण दौर्बल्यम्।

एवमाचारशिष्टात्मतुष्ट्योरपि दौर्बल्यं विशेषविषयेणाचारेण 'यदेव किं चनानूचानोभ्यूहत्यार्षंत इव तद्भवती'ति शिष्टात्मतुष्टिप्रामाण्यबोधकश्रुतेः सामान्यविषयतया विरुद्धविषयसंकोचोपपत्तेर्बाधः, इह च कामादिहेत्वन्तरसम्भवान्मूलभूतवाक्यकल्पनमपि दवीयः, न च तत्सम्भवति निषेधेनानिष्टसाधनतया बुद्धस्येष्टसाधनत्वेन बोधासम्भवात्, वस्तुनि विकल्पासम्भवात्, न वाचारकल्पितविधेरभ्यनुज्ञापरतया विरोधपरिहारः निषेधोपजीवकत्वाभावेनाभ्यनुज्ञाविधित्वासम्भवात्, तथा हि—निषेधोपजीवको विधिरभ्यनुज्ञाविधिः, तदुपजीवकत्वं च तद्बोधितानिष्टसाधनत्वाभावबोधनफलकतया यथाऽनृतवदननिषेधोपजीविको ब्राह्मणप्राणत्राणार्थोऽनृतवदनविधिः।

एवं च पूर्वप्रवृत्तस्मृत्यानिष्टसाधनत्वे बुद्धे आचारकल्पितविधेस्तदभावबोधासम्भवान्नाभ्यनुज्ञात्वेन विरोधपरिहारसम्भवः, नापि देशभेदेन व्यवस्थाकल्पनया विरोधपरिहारः—'पञ्चधाविप्रतिपत्तिर्दक्षिणतः पञ्चधोत्तरत इति देशभेदेनानाचारानुक्त्वा इतर इतरस्मिन् कुर्वन् दुष्यति नेतर इतरस्मिन्' इत्याद्यापस्तम्बवचनादिति वाच्यम्, स्मृतिसङ्कोचस्यान्याय्यत्वात्(१)। एतन्मूलकमेव मिथ्यैतदिति गौतमः शि-

---

मयूखः।

पात्यते नात्र संशयः' इतिवदकरणे निन्दाश्रवणाभावेन नियमत्वानुपपत्तेः। नापि द्वितीयः तथा सति विनैव विधिकल्पनं रागप्राप्तस्य पाक्षिकानुवादत्वेनैवोपपत्तेः अन्यथा 'प्रजापतिरुषसमभ्यैत् स्वां दुहितरमित्यादावपि अभ्यनुज्ञाविधिकल्पनापत्तेः। अत एव बौधायनेनैतत्परिणयनेऽनाचारत्वस्मृतिः एतेन न्यायसुधास्मृतिचन्द्रिकाकारणानां मातुलसुतापरिणयनस्य सदाचारत्वसमर्थनमपास्तम्। अधिकं कौस्तुभे द्रष्टव्यम्।

(१) अन्याय्यत्वादिति। अत एव बौधायनेन 'पञ्चधा विप्रतिपत्तिर्दक्षिणतः अनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनं पितृष्वसृमातुलदुहितृपरिणयनमिति तथोत्तरतः पञ्चधा ऊर्णाविक्रयः सीधुपानम् उभयतो दद्भिर्व्यवहारः आयुधीयकं समुद्रयानमिति

ष्टस्मृतिविरोधादिति गौतमवचनम् । अतो विरोधपरिहारासम्भवा-
दप्रामाण्यमेवंजातीयकाचाराणाम् ।

राणकस्तु-अस्याचारस्य 'गर्भे(१)नु नौ जनिता दम्पती कः । देवस्त्व-
ष्टर्जनिता स विश्वरूपः' 'आयाहीन्द्र पथिभिरीडितेभिर्यज्ञमिमं(२) नो
भागधेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वस्रेयी व-
पामिव' 'तस्मात्समानादेव (३) पुरुषादत्ता चाद्यश्च जायते । उत तृतीये
सङ्गच्छावहै उत चतुर्थे सङ्गच्छावहै तदेवं दीव्यमाना जात्या आसत"
इत्यादिप्रत्यक्षश्रुतलिङ्गमूलकतया बलवत्त्वात्स्मृतिकल्पितश्रुतेर्व्याप्या-
र्थनिश्चयाभावेन दुर्बलत्वात् , स्मार्तनिषेधस्य पुत्रिकापुत्रकरणे असुरा-
दिविवाहेषु च दुहितुर्जामात्रे दानाभावेन स्वत्वनिवृत्त्यभावाद्गोत्रानिवृ-
त्त्या तदुद्वाहनिषेधप्रवृत्तेस्तद्विषयत्वेन व्यवस्थया विरोधपरिहारास-
म्भवान्नेदमुदाहरणम् किन्त्वन्यदुदाहरणं गवेषणीयमित्याह ।

यत्तु माधवेन गान्धर्वविवाहेऽदानाद्गोत्रानिवृत्तिः "पितृगोत्रेण कर्तव्या

---

मयूखः ।

इतरः इतरस्मिन्कुर्वन् दुष्यति नेतर इतरस्मिन्देशप्रामाण्यात् मिथ्यैतदिति गौतमः उभयन्त्वे-
तन्नाद्रियन्ते शिष्टस्मृतिविरोधात् , इत्यनेन निराकृतम् । आपस्तम्बवचनं गर्हानिराकरण-
मात्रपरमितिबोध्यम् ।

( १ ) गर्भे नु इति । कः प्रजापतिः विश्वनिरूपको देवः त्वष्टा सवनशीलः नौ
आवयोर्गर्भे उदरे दम्पती जायापती रूपे अपत्ये जनिता जनयिष्यतीति । अतश्च
मम 'पुरुषान्तरात् तव च स्त्र्यन्तरे जनयिष्यमाणयोस्तावत्स्त्रीपुंसयोर्दम्पतीत्वमवश्यंभावि
तद्वरमावयोरेव तदन्योन्यसम्भोगादस्तु' इति यमयमीसम्वादेन भ्रातृभगिन्यपत्ययोर्द-
म्पत्यौचित्यद्योतनान्मातुलकन्यापैतृष्वस्रेयीपरिणये लिङ्गमिदम् तच्चाप्राप्तस्यानुवादायो-
गाद्रागादपि च नियमेनाप्राप्ते नित्यवदनुवादः प्रापकं विधिमनुमापयति ।

( २ ) आयाहीति । हे इन्द्र ईडितेभिः प्रशस्तैः पथिभिः मार्गैर्नोऽस्माकं
इमं यज्ञमायाहि तृप्तामाज्यसिक्तां वपां स्वीयं भागधेयं जुषस्व यथा मातु-
लस्य जहुः अपत्यं अर्थात् भागिनेयस्य योषा स्त्रीरूपत्वेन भागः यथा च पैतृष्व-
स्रेयी अर्थान्मातुलपुत्रस्य भागस्तथा वपेत्यर्थाभिधानेनेदमपि लिङ्गं विध्यनुमापकम् ।

( ३ ) तस्मादिति । समानादेकस्मात्पुरुषात् अत्ता भार्याया भोक्ता पुरुषः
आद्यश्च भोग्यो भार्यालक्षणो जायते इत्युक्तेः नचैवं सत्येकस्मादुत्पन्नयोर्भ्रातृभगिन्योरेव
जायापतित्वमुक्तं स्यात् तत्राह--उत तृतीय इति । उतशब्दः शङ्कानिराकरणार्थः तेन
कूटस्थाज्जाते तृतीये चतुर्थे वा विवाहाख्यां सङ्गतिं कुर्मः इत्येवं दीव्यमानाः क्रीडमानाः
जात्या कुलीना अप्यासते इदमपि च मातुलकन्यापैतृष्वस्रेयपरिणये लिङ्गम् ।

बान्धवैरुदककिया" इत्यादिस्मृतेस्तद्विषयत्वमुक्तं तद्धेमाद्रिलिखितैः—"गान्धर्वेण विवाहेन यस्तु कन्यां प्रयच्छति" इत्यादिवाक्यैर्विरोधादुपेक्ष्यम् ।

लोकवेदप्रसिद्ध्यधिकरणं तृतीयं वर्णकम् ।

यद्वा—लोकवेदयोः शब्दार्थविप्रतिपत्तौ चिन्त्यते । यथा त्रिवृच्चर्वश्ववालैक्षवादिशब्दानां त्रैगुण्यस्थाल्यश्वकेशेक्षववयवेषु प्रयोगेण लोके गृहीतशक्तिकानामुदाहरिष्यमाणवाक्यशेषैः स्तोत्रीयानवकौदनकाशतम्मूलेषु शक्तिरवगम्यते । तत्र द्वयोस्तुल्यबलतया विकल्प उत वाक्यशेषजन्या प्रतिपत्तिर्बलीयसीति चिन्ता ।

यववराहादिशब्देषु वाक्यशेषस्य शक्तिनिर्णायकत्वमिह तु वाक्यशेषस्य शक्तिग्राहकत्वमिति विशेषः । अत एव यववराहाधिकरणेनाकाधिकरणेन च गतार्थतासन्देहाभावः, न च तथापि वृद्धव्यवहाररूपाचारस्य श्रुत्यपेक्षया दौर्बल्यस्य स्मृत्याचारविरोधाधिकरणे चिन्तनात्तेन गतार्थतेति वाच्यम् , आचारस्यात्यन्तबाधाभावात् त्रिवृता यूपं परिव्ययतीत्यादावाचरस्यानुग्राह्यत्वात् , तत्र दृष्टार्थप्रयोगे तुल्यबलता वाक्यशेषगम्यार्थस्य वाक्यशेषार्थावधारणपूर्वत्वेनानन्यापेक्षलौकिकप्रसिद्धेर्वा बलवत्त्वमिति चेन्न;

अविरोधेऽर्थवादस्य शक्तिग्राहकत्ववद्विरोधेऽपि शक्तिग्राहकत्वे बाधकाभावात् , एवं च त्रिवृद्बहिष्पवमानमिति श्रुतस्य त्रिवृच्छब्दस्योपास्मै गायता नर इति तृचत्रयानुक्रमणेन नवभिःस्तुवन्तीति वाक्यशेषेण च स्तोत्रीयानवके शक्तिग्रहात्त्रिवृच्छब्दोच्चारणम्, एवमादित्यः प्रायणीयः पयसि चरुरित्येतद्विधायादितिमोदनेनेत्योदने शक्तिग्रहात्सर्वचरुमित्यादावप्योदनद्रव्यकत्वसिद्धिः , एवं ते बालाकाशनं प्राप्ता इति वाक्यशेषेण काशेषु शक्तिः, ऐक्षवीशब्देऽपि काशमूलशक्तिग्रहवाक्यशेषोऽनुमीयते, एवं स्तोमशब्दस्य समुदाये प्रसिद्धस्य स्तोत्रसाधनीभूतऋक्संख्याकृतस्तोत्रपरिमाणवाचित्वं 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इति व्याकरणात् त्रिवृत्पञ्चदशः सप्तदश एकविंश एतस्य स्तोमा इति वाक्यशेषाच्चावसीयत इति ।

आर्यप्रसिद्ध्यविरोधे म्लेच्छप्रसिद्धार्थपरिग्रहाधिकरणम् ।

चोदितं तु प्रतीयेताविरोधात्तु प्रमाणेन ॥९॥

प्रभा ।

यत्रार्याणां न क्वचिदर्थविशेषे व्यवहारस्तत्र पिकादिशब्देषु म्लेच्छप्रसिद्ध्या पिकादि-

शब्दवाच्यतया चोदितम् अवगतं तु एव कोकिलादिकं प्रतीयेत बलवता प्रमाणेन अविरोधात् ॥ ९ ॥

नन्वार्येष्वप्रसिद्धानां(१) पिक, नेम, सत, तामरसा, दिशब्दानां कोकिला, र्ध, वर्तुलशतच्छिद्रपात्र, कमला, दिषु म्लेच्छप्रसिद्धानामपि न तत्र शक्तिः किन्तु निगमनिरुक्तादिना तत्तत्प्रकरणानुगतार्थकल्पनम्। तेषु शब्दविप्लवादियोगाभावेन पदार्थाविप्लवाभियोग्यभावेन प्रतीयते विरोधात्प्रमाणे शक्तिनिर्णयासम्भवात् वाक्यनिगमनिरुक्तादीनामानर्थक्यापत्तेश्च, न च म्लेच्छप्रसिद्धेः क्लृप्तत्वान्निगमादिनार्थप्रसिद्धेः कल्प्यतया दुर्बलत्वेन शिष्टाकोपाधिकरणविरुद्धप्रमेयबलाबलेन निर्णय इति वाच्यम्, निगमादिवैयर्थ्यापत्त्या(२) क्लृप्ताया, अपि दुर्बलत्वात्। अतो म्लेच्छप्रसिद्धिर्दुर्बलेति चेन्न—

एतेषां वेदमध्यपाठेन निश्चितसाधुत्वानां मुख्याभावेन(३) शक्तिभ्रम गौण्योरसम्भवात् म्लेच्छप्रसिद्ध्यैवार्थनिर्णये बाधकाभावात्, प्राणिवधादियुक्तम्लेच्छप्रसिद्धेः क्रोमादिपदार्थनिर्णयस्यावश्यकत्वात्(४) कूटं दक्षिणेत्यादौ च तत्पदार्थनिर्णयस्य तद्व्यवहारिभ्यः(५) प्रसिद्धेऽर्थे निमित्तोक्तौ निगमादे(६)र्व्यापारादध्ययनविधिबलाच्चाभ्युदयशिरस्कत्वकल्पनया नानर्थक्यं वाक्यादीनाम। अतोऽविरुद्धा म्लेच्छप्रसिद्धिः प्रमाणम्।

---

मयूखः।

(१) इह शास्त्रस्थप्रसिद्धेः कल्प्यतयाऽप्रामाण्यकथनायापवादिकी सङ्गतिर्बोध्या।

(२) क्लृप्ताया इति। यद्यपि म्लेच्छप्रसिद्धेः क्लृप्ततया निगमादिप्रसिद्धेः कल्प्यतया रथकाराधिकरणन्यायेन बलीयस्त्वं प्राप्तं तथापि आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन निगमादिप्रसिद्धेरेव बलीयस्त्वमिति भावः।

(३) मुख्याभावेन—मुख्यार्थान्तराप्रसिद्ध्या।

(४) आवश्यकत्वादिति। अन्यथा विशस्तपश्ववयवाधिकारात् सामान्यतः पश्ववयववाचित्वज्ञानसत्त्वेऽपि निरुक्तादिभ्यो विशेषनिर्णयस्य कर्तुमशक्यतयाऽनुष्ठानासम्भवः स्यादितिभावः।

(५) तद्व्यवहारिभ्य इति। यथा य एव एतेन द्रव्यान्तरमिश्रहिरण्यरूपेण कूटेन व्यवहरन्ति तेभ्य एवार्थतत्त्वं ज्ञायते तथा वेदप्रयुक्तानां आर्येष्वप्रसिद्धानां म्लेच्छेभ्य एवार्थनिर्णय इति भावः।

(६) निमित्तोक्ताविति। निरुक्तादीनां हि निमित्तकथनरूपस्वव्यापाराविघातेन म्लेच्छप्रसिद्धार्थाङ्गीकारेऽपि आनर्थक्याभावः। ननु तेषामपूर्वार्थप्रतिपादनपरत्वाभावे निमित्तमात्रप्रतिपादनपरत्वे प्रयोजनाभावादानर्थक्यमत आह अध्ययनबलादिति। षडङ्ग-

## कल्पसूत्राणामस्वतःप्रामाण्याधिकरणम् ।

**प्रयोगशास्त्रमिति चेन्नासंन्नियमात् ॥ १० ॥ अवाक्यशेषाच्च ॥११॥ सर्वत्र प्रयोगात्सन्निधानशास्त्राच्च ॥१२॥**

प्रभा ।

प्रयोगशास्त्रं प्रयोगस्य क्रत्वनुष्ठानस्य साक्षाद् बोधकं शास्त्रं कल्पसूत्रादिकं वेदवत्साक्षादेव धर्मे प्रमाणं न तु वेदमूलकतया गौरवादिति **चेत् न असन्नियमात्** पूर्वमसद्भिर्जनिमद्भिर्बौधायनादिभिर्नियमात् निबन्धनात् पौरुषेयतया अपौरुषेयवेदतुल्यात्वासम्भवात् ॥ १० ॥

अत्रैव युक्त्यन्तरमाह—**अवाक्यशेषात्** । वाक्यशेषस्य अभावोऽवाक्यशेषं तस्मात् कल्पसूत्रेषु अर्थवादवाक्यस्यादर्शनात् वेदेषु च दर्शनात् न वेदतुल्यत्वम् ॥ ११ ॥

ननु वेदतया वेदमूलकतया वा कल्पसूत्राणां प्रामाण्ये विशेषाभावादयं विचारो निष्फल इत्याह **सर्वत्र** निदानसूत्रे 'पूर्वपक्षे सर्वासु तिथिषु अमावास्यायाः' **प्रयोगात्** प्रयोगविधानात् **सन्निधानशास्त्राच्च** सन्निधानं दर्शपूर्णमाससन्निधौ विद्यमानम् 'अमावास्यायामावास्यया यजेत' इति श्रुतिवचनं तु वर्तते एवं च कल्पसूत्राणां वेदत्वे विकल्पः स्यात् वेदमूलकत्वे च श्रुतिविरोधेऽप्रामाण्यमिति सफलो विचारः ॥ १२ ॥

**इह कल्पाः(१) सूत्राणि स्मृतीरङ्गानि शाक्यवाक्यानि चोदाहृत्य किमेषां स्वातन्त्र्येण प्रामाण्यमुत वेदमूलकतयेति सन्देहः ।**

**प्रयोगप्रतिपादकाः कल्पाः, संज्ञापरिभाषादिरूपेण प्रयोगविशेषोन्नायकलक्षणप्रतिपादकानि सूत्राणि, तत्र शिष्टपरिग्रहानुपपत्तिकल्प्यवेदमूलत्वापौरुषेयत्वयोरपौरुषेयत्वस्य लघुत्वात्(२) (तेषां)वेदत्वं तच्छन्दप्रयोगाभावाद्वा वेदतुल्यत्वं युक्तम्, एवं च साक्षाद्धर्मप्रमाजनकत्वम् । अन्यथा प्रयोजकत्वेन प्रामाण्यविघातः, (३)अङ्गानां तु 'षडङ्गमेक' इति**

---

मयूखः ।

वेदाध्ययनविधिबलेन निरुक्तादिजन्यपदार्थनिर्वचनज्ञाने सत्येव तत्पूर्वककर्मानुष्ठाने फलं नान्यतो निर्वचनज्ञान इति कल्पनेन सार्थक्यमितिभावः ।

( १ ) **कल्पाः**—प्रयोगं कल्पयन्तीतिव्युत्पत्त्या प्रयोगप्रतिपादका ग्रन्थाः बौधायनीयादयः, **सूत्राणि**—सूचयन्तीति व्युत्पत्त्या संज्ञापरिभाषादिरूपेण प्रयोगविशेषोन्नायकलक्षणप्रतिपादकाः आश्वलायनादयः ।

( २ ) लघुत्वादिति । वेदमूलत्वकल्पने पुरुषः, तन्मूलप्रमाणं वेदः, तन्नित्यत्वं, चेति त्रयं कल्प्यम् इति अकर्तृकत्वकल्पने तु नेति लाघवमित्यर्थः ।

( ३ ) अङ्गानामिति । 'मन्त्रब्राह्मणयोर्वेदनामधेयं, षडङ्गमेक' इति गौतमेन वेदत्वस्मरणादितिभावः ।

वेदत्वस्मृतेर्नित्यब्रह्मयज्ञविधिविषयत्वेन चासन्दिग्धमेव वेदत्वम्, मानवादिसमाख्यानं काठकादिवत्प्रवचननिमित्तत्वेनोपपन्नम्। अन्यत्रापि समाख्यायाः सामान्यप्राप्तकर्तृनियामकतया कर्तृप्रापकत्वाभावात्, ननु मशकेनेदं कृतमिति स्मरणमपि करोतेर्गन्धनावक्षेपणादिस्मृत्याऽनेकार्थत्वावगतेः प्रवचनार्थत्वेनोपपादनीयम् 'शिशुर्वा आङ्गिरसां मन्त्रकृतां मन्त्रविदासीदि'तिवत्, एवं शाक्यादिग्रन्थानामपीति पूर्वपक्षः।

सिद्धान्तस्तु—लाघवस्य तर्कविधया प्रमाणानुग्राहकत्वेनानादिप्रसिद्धिरूपाचारप्रमाणसिद्धसकर्तृकत्वबाधकत्वायोगात् (१) वेदेऽपि न लाघवमात्रेणाकर्तृकत्वसिद्धिः किन्तु तादृशप्रसिद्धिः कर्तृस्मरणद्वारादृश्यादर्शनस्याभावसाधकत्ववत्स्मर्तव्यास्मरणस्यापि तदभावसाधकत्वात्, एवं च मानान्तरसिद्धापौरुषेयत्वे वेदे मन्त्रकृदासीदित्यादौ प्रकथनार्थत्वेन व्याख्यानं युक्तम्, स्मृत्यादीनां तु कर्त्रभावसाधकमानाभावात्तद्विरुद्धसकर्तृकत्वसाधकमानसद्भावाच्च कृञः प्रकथनार्थत्वेन व्याख्या युक्ता—एवं चात्रापि समाख्याया कर्तृविशेषनियामकत्वम्।

अत एव धर्ममूलत्वस्मरणेनापि नापौरुषेयत्वसिद्धिः तस्य वेदमूलकतया धर्मप्रमाप्रयोजकत्वेनाप्युपपत्तेः। 'षड्ङ्गमेक' इति स्मरणं तु परमतोपन्यासेन सिद्धान्तत्वाभावप्रतीतेरप्रमाणम्। अतो नापौरुषेयत्वं स्मृतीनामङ्गानाञ्च।

शाक्यादिग्रन्थानां तु तन्मतविरुद्धमपौरुषेयत्वम्—ते हि ध्वंसप्रागभावयोरावरणभङ्गरूपाकाशस्य च वस्तुत्वेन नित्यत्वं तदन्यस्य सर्वस्य क्षणिकत्वमिच्छन्ति। तेषां वर्णपदवाक्यसमुदायस्य नित्यत्वं नोपपद्यते प्रवाहनित्यत्वं च तन्निष्ठजात्यादेर्नित्यतयाङ्गीकारं विना नोपपत्तिमत्। अतोऽपौरुषेयत्वासम्भवाद्वेदविरोधित्वेन वेदमूलत्वासम्भवाच्चाप्रामाण्यमेव।

अवशिष्टानांकल्पादीनां तु वेदमूलत्वम्। न चैषां प्रत्यक्षश्रुतिमूलत्वेप्रणयनवैयर्थ्यापत्तेः शाखान्तरत्वं कल्पनीयमिति वाच्यम्, शाखान्तरीयाविरुद्धाङ्गोपसंहारात् साङ्गानुष्ठानज्ञानप्रयोजनकत्वात्, श्रुतिस्मृतीतिहासविषयभूतार्थविषयप्रमाजननेन प्रामाण्यसम्भवाच्च।

न च वेदजन्यावगमस्याभ्युदयजनकत्वनियमेन कल्पसूत्राणां तदु-

मयूखः।

(१) अयोगादिति। लाघवं हि प्रमाणानुग्राहकं न स्वतः प्रमाणम् अन्यथा लाघवेन कालिदासादिवाक्येष्वप्यकर्तृकत्वापत्तिरिति भावः।

पस्थापकत्वासम्भवः, स्वाध्यायविधिनेव 'षडङ्गो वेदोऽध्येतव्य' इति विधिनाङ्गजन्यावगमस्याभ्युदयहेतुत्वावगमात्, धर्मज्ञाने वेदनियमेन ज्ञानकार्यानुष्ठानसौकर्ये कल्पादीनां(१)हेतुत्वेन भिन्नकार्यतया व्रीह्याज्यादिवत्समुच्चयसम्भवाच्च, स्वशाखाया इव स्वकल्पस्वगृह्याणामुपस्थापकतया न वैयर्थ्यशङ्कापि ।

नित्यब्रह्मयज्ञविधिविषयत्वं (२)च प्रवाहनित्यताङ्गीकारादुपपन्नम्, प्रवाहनित्यत्वं च सजातीयप्रागभावसमव्याप्तसजातीयध्वंसकत्वम्, (३)कल्पत्वादीनां जातित्वाङ्गीकारो नृसिंहत्ववत्, तन्नानुमानं न विद्यत(४)इति वचनमपि प्रत्यक्षश्रुतिमूलत्वेनानुमेयश्रुतिमूलत्वं न विद्यत इति व्याख्येयम्, (५)अतः कल्पादीनां वेदमूलकत्वेन प्रामाण्यं न स्वातन्त्र्येणेति सिद्धम् ।

प्रयोजनं तु प्रत्यक्षश्रुतिविरुद्धकल्पानामुपन्यस्यमानन्यायादिहेतुमूलानां न्यायानां च मीमांस्यमानानामभासत्वावधारणे तेषामप्रामाण्यसिद्धिः ।

यथाऽऽधानाङ्गगोपिण्डापितृयज्ञबोधकबोधायनसूत्रं पिण्डपितृयज्ञविधायकश्रुत्यर्थभ्रान्तिमूलम् न वचनमूलम्, इष्टौ वेदग्रहत्वेत्यादिपिण्डपितृयज्ञविधायकसार्थवादकश्रुतेस्तत्रैवोदाहृतत्वेन श्रुत्य-

---

मयूखः ।

( १ ) कल्पादीनामिति । कल्पयन्ति वेदार्थं ग्रन्थनन्ति इति कल्पाः । वेदार्थग्रथनेन अनुष्ठानसौकर्ये तेषां हेतुत्वमिति भावः ।

( २ ) ननु अहरहः स्वाध्यायमधीयतेत्युपक्रम्य 'यदृचोऽधीते यद्यजूंषि यद् ब्राह्मणानीतिहासान् पुराणानि कल्पान्' इति नित्योऽनादिसिद्धो ब्रह्मयज्ञविधिः कल्पानामाधुनिकत्वे नोपपद्येतेत्यत आह–नित्यब्रह्मेति । अयं भावः एतन्निर्माणात्पूर्वमस्य कल्पस्याभावेऽपि वेदार्थकल्पकत्वरूपोपाधिनैवंजातीयकानां ग्रन्थानां केषांचित् सर्वदैव सत्वात्प्रवाहनित्यतया नित्यसंयोगाविरोधोपपत्तेर्न दोष इति ।

( ३ ) प्रवाहनित्यत्वमिति । सजातीयस्य यः प्रागभावस्तेन समव्याप्तो यः सजातीयस्य ध्वंसस्तत्प्रतियोगित्वमित्यर्थः यस्य कस्यचित्कल्पस्य प्रागभावः यस्य कस्यचिद् ध्वंसश्च सर्वदास्ति कल्पान्तरस्य नाशेऽपि कल्पान्तरं प्रवाहान्तरस्य नाशेऽपि प्रवाहान्तरमिव तिष्ठत्येवेति भावः ।

( ४ ) माशकं प्रकृत्य लाटद्राह्यायणसूत्रकारीयमिदं वचनम् ।

( ५ ) व्याख्येयमिति । कौस्तुभकारस्तु माशकस्य अस्मदादिप्रत्यक्षश्रुतिमूलत्वेन तत्रानुमानमितिवचनं स्मृतिपुराणादिवैषम्यप्रतिपादनपरं द्रष्टव्यमिति व्याचख्यौ तस्याप्युक्त एवार्थः ।

न्तराभावनिश्चयात्, तत्र च कर्मलाक्षणिकामावास्यापदसमभिव्याहारेण यज्ञनिष्क्रयार्थवादेन च पिण्डपितृयज्ञविधायकत्वनिश्चयात्, अप्रधानस्यायज्ञत्वाच्च ।

तथा 'अक्रियामेकेऽन्यत्र (१)तदर्थवादवदनात्' इति सवनीयपशुपुरोडाशविकल्पबोधकाश्वलायनसूत्रं श्रुत्यर्थभ्रान्तिमूलं न वचनमूलमार्थवादिकफलवत्त्वन्यायस्य मूलतया तेनैवोक्तेन मूलश्रुत्यभावनिश्चयात् ।

एवम् 'अङ्गं वा समभिव्याहारादि'ति पिण्डपितृयज्ञस्याङ्गताबोधककात्यायनकल्पसूत्रं श्रुत्यर्थभ्रान्तिमूलं समभिव्याहारहेतोस्तेनैवोक्तत्वेन मूलश्रुत्यभावनिश्चयात् ।

एवं न्यायविरुद्धानामप्याग्नेयीसुब्रह्मण्यायां न्यायविरुद्धोहप्रतिपादककल्पानाम्, इति न कल्पादीनां वेदवदपौरुषेयत्वम्, सान्नियमात् इति सूत्रं तु पूर्वमसतां कल्पादीनां निबन्धनरूपनियमस्मृतेरपौरुषेयत्वमिति व्याख्येयम् ।

## सामान्यश्रुतिकल्पनाधिकरणम् ।

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १३ ॥ अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य ॥ १४ ॥ दर्शनाद्विनियोगः स्यात् ॥ १५ ॥ लिङ्गाभावाच्च नित्यस्य**

---

### मयूखः ।

( १ ) तथेति । सवनीयपशुपुरोडाशं प्रकृत्य अक्रियामेकेऽन्यत्र तदर्थवादवदनात् इत्याश्वलायनसूत्रं तस्यायमर्थः–अग्निषोमीये हि पशुपुरोडाशस्य च्छिद्रपिधानार्थत्वं रात्रिसत्रवत् 'सुषिरो वै तर्हि पशुर्यर्हि वपामुत्खिदति यद् व्रीहिमयः पुरोडाशो भवत्यपिधानाय' इत्यर्थवादात्प्रतीयते अतश्च सवनीये चोदकेन नित्यकर्तव्यतया प्राप्तस्य पशुपुरोडाशस्य 'अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्ते अपिहित्या अच्छिद्रतायै' इत्यर्थवादादेव च्छिद्रापिधानार्थत्वेन विधीयमानैः सवनीयपुरोडाशैरेव कार्यसिद्धेः प्रत्याम्नानेन बाधात् 'वपया प्रातः सवने चरन्ति' पुरोडाशेन माध्यन्दिने अङ्गैस्तृतीयसवने इति लिङ्गेन प्रतिप्रसवाद्विकल्प इति ।

अस्य च द्वादशाधिकरणन्यायेनाभासत्वम् तथाहि 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपति' इतिविहितस्य पुरोडाशस्य वाक्येन देवतासंस्कारकत्वस्य दशमे स्थापनात् छिद्रापिधानार्थत्वं पर्णमयीन्यायेन प्रत्यक्षविरोधाच्चार्थवादमात्रमिति नित्यमेवातिदेशेन पुरोडाशः सवनीये कर्तव्य इत्युक्तम्, एवं च सूत्रोक्तस्य न्यायस्य न्यायेनैवाभासत्वकरणाद्यावच्छ्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यम् ।

**॥१६॥ आख्या हि देशसंयोगात् ॥१७॥ न स्याद्देशान्तरेष्विति चेत्स्याद्योगाख्या हि माथुरवत् ॥ १८ ॥ कर्मधर्मो वा प्रवणवत् ॥ १९ ॥ तुल्यं तु कर्तृधर्मेण ॥ २० ॥**

प्रभा

**अनुमानव्यवस्थानात्**—अनुमीयते मूलभूता श्रुतिरनेनेति अनुमानं गौतमादिधर्मशास्त्रं होलाकादिराचारश्च तस्य व्यवस्थानात् छन्दोगादिभिः उदीच्यादिभिरेवानुष्ठानस्य दर्शनात् तन्मूलतया कल्प्यमानं **प्रमाणं** श्रुतिरूपं **तत्संयुक्तं** छन्दोगोदीच्याद्यधिकारिवाचकपदघटितं **स्यात्** ॥ १३ ॥

**अपि वा** इति पूर्वपक्षव्यावृत्तौ तत्तत्स्मृत्याचाराभ्यामनुमितः श्रुतिरूपोऽर्थः **सर्वधर्मः** छन्दोगादिपदाघटितः **स्यात् विधानस्य** विधीयतेऽनुमीयते यत्तद्विधानं मूलभूतश्रुतिवाक्यं तस्य **तन्न्यायत्वात्** सर्वधर्मत्वौचित्यात् सङ्कोचे प्रमाणाभावेनासति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायादिति भावः ॥ १४ ॥

शिखाकर्मादिषु तु 'मुण्डा भृगवः' इति व्यवस्थापकवचनस्य **दर्शनात् विनियोगः** भृग्वाद्यधिकारिविशेषान्वयः **स्यात्** ॥ १५ ॥

होलाकाद्याचारोऽनुष्ठातृषु **नित्यस्य** व्यवस्थितस्य कस्य चिदपि **लिङ्ग** लिङ्गस्य **अभावाच्च** न व्यवस्थितविषयकत्वमाचाराणाम् लिङ्गेत्यविभक्तिको निर्देशः ॥ १६ ॥

ननु उदीच्यादिसमाख्यैव व्यवस्थितं लिङ्गमस्तु अत आह—**आख्या** प्राच्यादिसमाख्या **हि देशसंयोगात्** प्राच्यां भव इत्यादिव्युत्पत्त्या देशसम्बन्धनिमित्तिका सा च न व्यवस्थिता प्राग्देशं परित्यज्य दक्षिणदेशं गतैरपि होलकाद्याचारस्यानुष्ठानात् दक्षिणदेशं परित्यज्य प्राग्देशं गतैरपि अननुष्ठानात् ॥ १७ ॥

प्राच्यादिसमाख्यानस्य देशसम्बन्धनिमित्तकत्वे **देशान्तरेषु** स्थितेषु प्राच्यादिव्यवहारो **न स्यात्** अतः प्राच्यत्वादिकं जातिः **इति चेत् हि** यतः प्राच्यादिसमाख्या **योगाख्या माथुरवत्** मथुराया आगतः न तु मथुरायां भवस्तद्वत् प्राच्या आगत इति **स्यात्** तथा च कल्पकाभावान्न प्राच्यत्वादिकं जातिः ॥ १८ ॥

ननु अव्यवस्थितत्वात्प्राच्यादिपदघटितश्रुतिकल्पनस्यासम्भवेऽपि 'कृष्णमृत्तिकाप्राये अहीनैबुकापरपर्यायं करञ्जवृक्षपूजनं कुर्युः' इत्येवं रीत्या श्रुतिकल्पनं सम्भवत्येव **प्रवणवत्** 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इत्यत्रेव कृष्णमृत्तिकाप्रायादिदेशविशेषः **कर्मधर्मो** अहीनैबुकादिकर्माङ्गं स्यात् ॥ १९ ॥

समाधत्ते–देशविशेषः कर्मधर्मतयोक्तः **कर्तृधर्मेण** प्राच्यत्वादिना **तुल्यं तु** तुल्य एव कृष्णभूमिं परित्यज्य रक्तमृत्तिकाप्रायदेशनिवासिभिरपि तदनुष्ठानात् ॥ २० ॥

**अत्र प्रसङ्गात्स्मृतिमूलश्रुतिगतविशेषचिन्ता । तथा हि—होलाकाद्याचाराणां प्राच्यगतत्वेन, करञ्जपूजारूपाहीनैबुकाचाराणां दाक्षि-**

णात्यगतत्वेन, उद्वृषभयज्ञादि(१)रूपाणामौदीच्यगतत्वेन, तथाविधानां (२)निषेधानां गौतमादिस्मृतिपाठस्य गृह्याणां च व्यवस्थां(३) दृष्ट्वा तन्मूलश्रुतिरपि 'प्राच्यैरनुष्ठेयम्' इति कल्प्यते उत 'इदमनुष्ठेयम्' इति सामान्यरूपेति ।

एतेन(४) होलाकादि प्राच्यैरनुष्ठेयमुत सर्वैरिति चिन्तायाः षष्ठ-विषयत्वेनासङ्गतिरपास्ता ।

केचित्तु—होलाकाद्याचारा गौतमादिस्मृतिश्चान्यान् प्रति प्रमाणमुत नेति विचारं प्रदर्शयन्ति—

तत्र निर्दुष्टज्ञानोत्पादकत्वरूपप्रामाण्यस्य राजसूयवाक्य इव बाधकाभावात्(५) ।

राणकस्तु—नानागृह्यप्रतिपाद्यस्थालीपाकादीनां शाखान्तराधिकरणनयेनाभेदात्तदङ्गानामपि सर्वविषयत्वावगमेन व्यवस्थाशङ्कानुपपत्तिः, तत्तच्छाखाध्ययनेतिकर्तव्यतात्वेन तत्तच्छाखाम्नातोपनयनोपाकरणादीनां(६) तत्तदङ्गत्वाङ्गीकरणात् सिद्धान्तानुपपत्तिश्च । अतो यत्पुरुष-

---

मयूखः

( १ ) उद्वृषभयज्ञादीति । ज्येष्ठायां पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्तीत्युद्वृषभयज्ञ उदीच्यैरेव तथा अयमेवोत्सवो भाद्रपदामावास्यायां दाक्षिणात्यैरेव क्रियते सोऽयमुद्वृषभयज्ञ इत्युच्यते ।

( २ ) तथाविधानामिति । क्वचिद्देशविशेषे कैश्चिदेव किंचिद्वर्ज्यते इति तादृशनिषेधानामित्यर्थः ।

( ३ ) व्यवस्थामिति । गौतमीयं गोभिलीयं च छन्दोगैरेव, वासिष्ठं बह्वृचैरेव, शङ्खलिखितोक्तं वाजसनेयिभिः, आपस्तम्बबौधायनीयं तैत्तरीयैरेवेति व्यवस्थामित्यर्थः ।

( ४ ) ननु प्राच्यैरेवानुष्ठेयमुत सर्वैरित्येवं विचारस्य अधिकारविषयकत्वात्षष्ठाध्याये एव सङ्गतिरत आह—एतेनेति । व्यवस्थिताव्यवस्थितश्रुतिमूलकत्वविचारस्य प्रमाणलक्षणे संगतत्वेनेत्यर्थः । अयं भावः आचारमूलभूता श्रुतिः प्राच्यैरेवानुष्ठेयमित्येवंरूपा कल्प्या उत सर्वैरेवानुष्ठेयामित्येवंरूपा कल्प्येति विचारस्य प्रमाणविषयकत्वेन प्रमाणलक्षणे संगतिरिति ।

( ५ ) बाधकाभावादिति । अयं भावः प्रमाण्यं हि आलौकिकत्सर्वपुरुषसाधारणं न हि राजसूयवाक्यस्य ब्राह्मणं प्रत्यप्रवृत्तावपि तं प्रत्यप्रामाण्यमिति निर्दुष्टज्ञानोत्पादकत्वरूपप्रामाण्यस्य ब्राह्मणं प्रत्यपि सत्त्वं तद्वदिति ।

( ६ ) उपनयनेति । उपनयनोपाकरणादीनां वेदाध्ययनाङ्गत्वात् तत्तच्छाखाध्ययनस्य भेदेनेतिकर्तव्यतापेक्षायां भेदेनैव तत्तद्गृह्याम्नातोपनयनादीनामङ्गत्वावगम इति भावः ।

धर्मत्वेन क्वचिदेव (१)गृह्ये विहितं यथा 'कपालं भगालमिति ब्रूयादि'ति तदुदाहरणमित्याह—

तत्र—स्थालीपाकादिकर्मणोऽभेदेऽपि तदङ्गानां नाराशंसप्रयाजव्यवस्थाशङ्कोपपत्तेः ।

एवमध्ययनोपनयनादीनां तेनैव नयेनाभेदे सिद्धे शाखास्वरूपेऽनर्थकानां विघ्ननिवृत्तिद्वाराध्ययनाङ्गानामव्यवस्थोपपत्तेश्च(२), अतो (अतः सर्वविषये) गृह्यादिकमत्रोदाहरणम् ।

(पूर्वपक्षः)

तत्र एतन्मूलश्रुतेराचाररूपलिङ्गानुमेयत्वाल्लिङ्गस्य व्यवस्थितत्वात् तत्समानाधिकरणसाध्यसिद्धिः, अन्यथा श्रुतेः सामान्यविषयत्वे तत्प्रवर्तिताचारस्य सामान्यविषयत्वापत्तिः, तेन स्मृत्याचारयोर्नियतकर्तृकत्वान्यथानुपपत्त्या नियतविषयश्रुतिकल्पनं युक्तम् प्राच्यैरिदं कर्तव्यमित्यादि, तत्र प्राच्यत्वम् 'अहं प्राच्य' इत्यभिमानविषयत्वम् तैत्तरीयत्वादि तु प्रसिद्धमेव अतो व्यवस्थेति चेन्न—

(सिद्धान्तः)

उपपदप्रतिषेधसामर्थ्यानामभावेन(३) व्यवस्थाया असम्भवात्, न ह्यत्र राजा राजसूयेनेत्यादिवत्प्राच्यैरिदं कार्यमित्युपपदसम्भवः तत्र जातः तत आगतः सोऽस्य निवासः तत्र भव इति विहिततद्धितान्तप्राच्यपदप्रकृतिभागप्राग्देशस्य दिशो वाऽव्यवस्थितत्वेन सर्वत्र सत्त्वाद्दक्षिणादिगवस्थितेऽपि व्यवहारसत्त्वेनोपपदत्वासम्भवात्, न हि केषुचित्प्राच्यत्वं जातिस्तदुपलक्षणं वा किञ्चिदस्ति, भवो गर्भसम्भवः, जात उत्पन्न इति भेदः, तैत्तिरीयत्वादिकं (४)सम्भवदन्यथापत्तिकल्पि-

---

मयूखः ।

(१) क्वचिदेव-गौतमे ।

(२) अव्यवस्थोपपत्तेश्चेति । द्वादशे अध्ययनाङ्गानामुपनयनादीनां विघ्ननिवृत्त्यर्थत्वेनोपयोगस्य वक्ष्यमाणत्वात् तस्य च शाखान्तरन्यायेनैकत्वावगमेन भेदेनाङ्गग्राहित्वायोगात्तदव्यवस्थेत्यर्थः ।

(३) उपपदेति । सर्वत्र कर्तृविशेषज्ञानमुपपदात्प्रतिषेधात्सामर्थ्याद्वा भवति यथा राजोपपदात् राजसूये क्षत्रिय एव, यथा पतितेषु निषेधात् वैदिके कर्मणि तद्भिन्ना एव, यथा द्विजानामेवाहिताग्नित्वात् शूद्रादेस्तदभावादग्निहोत्रादिषु समर्था द्विजा एवा कर्तारः तथेह उपपदं निषेधो वा नास्तीति प्राच्यादिव्यतिरिक्तानामपि कर्तृत्वं सामर्थ्यं तु सर्वेष्वविशिष्टमिति भावः ।

(४) तैत्तरीयत्वादिकमिति । यद्यपि स्मृतिमूलश्रुतिषु चरणविशेषवाचितैत्तरीयाद्यु-

तश्रुत्याकाङ्क्षाभावान्नाश्रीयते, अध्ययनव्यवस्थाया अर्थसमानासिद्ध-त्वेनोपपत्तेः, छन्दोगो गौतमः कर्ता स्वशिष्यान् छन्दोगानध्यापयामास, तेऽप्यन्यान् छन्दोगानित्यार्थिकी व्यवस्था, नैतावता व्यवस्थितश्रुतिकल्पनम् गौरवात् अतो नोपपदवशेन व्यवस्था, नापि स्त्रीशूद्रौ नाधीयातामित्यादिवत्प्रतिषेधः, नाप्यग्निविघातजन्यक्रतुषु तदभाववतः शूद्रस्येवासामर्थ्यम्, अतोऽव्यवस्थेति ।

यत्र मुण्डा भृगवः पञ्चशिखा वासिष्ठा इत्यादिस्मृतिवशेन सोपपदश्रुतिकल्पनम्, यत्र वा कुलधर्माद्याचारेण कुलधर्मः कर्तव्य इति ससम्बन्धिक पदार्थघटितश्रुतिकल्पनम्, तत्र भवत्येव व्यवस्था, तत्र तत्तत्कुलधर्ममूलानन्तश्रुतिकल्पनायोगेऽपि 'कुलधर्मः कार्य' इति कल्पितश्रुतौ ससम्बन्धिककुलपदस्य सत्त्वात्स्वीयकुलधर्मः कार्य इति तस्यार्थः एवं च 'स्वाध्यायोऽध्येतव्य इतिवद्व्यवस्थासिद्धिः ।

होलाकादीनां(१) तु कुलधर्मत्वाप्रसिद्ध्या न तादृशोपपदयुक्तश्रुतिकल्पनासम्भवः, नापि होलाकाद्यनुष्ठातृषु पिङ्गेक्षणत्वादिसामान्यं किञ्चित्, अनुगतस्य तस्या भावात्, नापि प्राच्य इत्यनुगतप्रतीत्या प्राच्यत्वं जातिः तस्य शब्दस्य तद्धितान्ततया यौगिकत्वात्, अत एषामव्यवस्थेति ।

## व्याकरणप्रामाण्याधिकरणम् ।

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् २१ शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥२२॥ अन्यायश्चानेकशब्दत्वम् ॥ २३ ॥ तत्र तत्त्वमभियोगविशेषात् स्यात् ॥२४॥ तदशक्तिश्च तदनुरूपत्वात् ॥२५॥ एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २६ ॥**

प्रभा ।

**प्रयोगोत्पत्त्यशास्त्रत्वात्**—व्याकरणस्य प्रयोगे साधुशब्दप्रयोगे उत्पत्तौ स्वभावे

---

मयूखः ।

पपदं सम्भवति तथापि तत्कल्पनायां मनाभावः श्रुतिकल्पकं स्मृतिवाक्यं हि तत्कल्पकं स्यात्तत्र च नोपपदश्रवणं तैत्तरीयादिमात्रव्यवस्थितपाठस्य तु न कल्पकत्वं पाठं विनापि अवगतमात्रस्य श्रुतिकल्पकत्वोपपत्तेरिति भावः ।

( १ ) होलाकादीनामिति । अभियुक्तानां होलाकादिषु न कुलधर्मत्वव्यवहारोऽपि तु देशधर्मत्वव्यवहारः इति मूलश्रुतौ कुलोपपददाने तदनुपपत्तिरिति न कुलोपपदश्रुतिकल्पनसंभव इति भावः ।

साधुत्वे इति यावत् औत्पत्तिक इत्यत्रोत्पत्तिशब्दस्य स्वभावपरत्वदर्शनात्' अशास्त्रत्वाद् अनियामकत्वात् **शब्देषु** गोगाव्यादिषु **व्यवस्था** साध्वसाधुविभागः **न स्यात्** व्याकरणेन 'साधुः प्रयोक्तव्यः' 'अयं शब्दः साधुः' इति बोद्धव्यं तच्चाशक्यं साधुत्वस्य नर्वक्तुमशक्यत्वादिति शेषः ॥ २१ ॥

समाधत्ते **शब्दे** गवादिशब्दे **प्रयत्ननिष्पत्तेः** कण्ठताल्वादिप्रयत्नेन निष्पत्तेर्दर्शनेन गाव्यादिशब्दानाम् **अपराधस्य** अयथोच्चारणस्य **भागित्वं** गम्यते एवं च अनपभ्रष्टत्वं यथोच्चारणाभिव्यङ्ग्यत्वं वाचकत्वं वा साधुत्वं तज्ज्ञापकं च व्याकरणमिति साध्वसाधुविभागे व्याकरणं प्रमाणम् ॥ २२ ॥

ननु गोशब्दवद् गाव्यादिशब्दानामपि वाचकत्वादिकमस्त्वत आह—**अनेकशब्दत्वम्** एकस्य गवादिरूपार्थस्य वाच्यत्वसम्बन्धेनानेकशब्दवत्त्वम् **अन्यायश्च** अनुचितम् ॥ २३ ॥

**तत्र** गवादिशब्देषु **तत्त्वं** साधुत्वम् इतरेष्वपभ्रष्टत्वं च अभियुक्तानां पाणिन्यादीना**मभियोगविशेषात्** उपदेशविशेषात् **स्यात्** अवगन्तुं शक्यमित्यर्थः ॥ २४ ॥

**तदशक्तिश्च** गाव्यादिशब्दानामवाचकत्वं च **तदनुरूपत्वात्** गवादिशब्दानुरूपत्वात् अयं भावः गाव्यादयः शब्दाः कथञ्चिद्वर्णसाजात्येन गवादिशब्दमनुमाय्यैवार्थबोधकाः इति तेषु वाचकत्वकल्पनमयुक्तमिति ॥ २५ ॥

**विभक्तिव्यत्यये च** अश्मकेभ्य आगच्छामीति वक्तव्ये अश्मकैरागच्छामि इति विभक्तिविपर्यासेऽपि **एकदेशात्** अश्मकशब्दात्प्रातिपदिकात् अश्मकेभ्य इतिपदं स्मृत्वाऽर्थं प्रतियन्ति तद्वद्गव्यादिशब्दतोऽपि गवादिशब्दस्मृत्यार्थस्य **प्रत्ययो** युक्तः स्यात् ॥ २६ ॥

( पूर्वपक्षः )

**इदानीं व्याकरणमूलश्रुतौ प्राच्यत्वादिवत्साधुत्वस्य निर्वक्तुमशक्यतयोपपदासम्भवाद्व्याकरणस्मृतेः श्रुतिमूलत्वासम्भव इत्याक्षेपः(१) समाधीयते—साधूनेव प्रयुञ्जीत नासाधून्, गवादय एव साधवो न गाव्यादय इति नियमद्वयार्थं व्याकरणं तत्र गोपदं प्रयोज्यमित्याकारकाणि नानन्तवाक्यानि मूलं गौरवात्, न च पूर्वोक्तवाक्यसदृशं वाक्यम्(२)अनुगतस्य साधुत्वस्यासम्भवेनोपपदासम्भवात्। न तावद्व्याकरणानुगतत्वं साधुत्वं वचन्तीत्यादावसम्भवात्(३),नवार्थप्रत्यायकत्वम् गाव्यादिपदे-**

---

मयूखः ।

( १ ) आक्षेपः इति । स्मृत्यधिकरणन्यायेन सिद्धमपि व्याकरणप्रामाण्यं न सम्भवतीत्याक्षेपादाक्षेपसङ्गतिरत्र बोध्या ।

( २ ) वाक्यद्वयमिति । मूलमितिशेषः ।

( ३ ) असम्भवादिति । वचन्तीत्यस्य व्याकरणानुगतत्वेऽपि असाधुत्वादिति भावः ।

ष्वपि तत्सत्त्वात्, अनाद्यर्थप्रत्यायकत्वस्य चाधुनिकसङ्केतितडित्थादिपदेषु पाणिनिसङ्केतितटिघुभादिष्वव्याप्तेः, अवश्यस्मरणेन गाव्यादिपदेष्वपि तदभावस्य वक्तुमशक्यत्वात्, अतः साधुत्वनिर्वचनासम्भवे तद्घटितमूलश्रुतिकल्पनासम्भवान्निर्मूलत्वेन व्याकरणमप्रमाणम्, एवं कालेय वामदेव्यादिपदव्युत्पादकप्रत्ययप्रतिपादकस्य कलेर्ढक् वामदेवाड्ड्यड्ड्याविति व्याकरणस्य (१)यद्कालयत्तत्कालेयस्य कालेयत्वं वामं वा इदं देवेभ्योऽजनि तस्माद्वामदेव्यमिति वेदविरोधात् वाक्यस्फोटादिप्रतिपादकव्याकरणस्य न्यायविरोधाद(२)प्रामाण्यमिति चेन्न—

( सिद्धान्तः )

अनादिवृत्ति(३)प्रमाप्रयोज्यार्थप्रतिपादकत्वरूपसाधुत्वस्य वृत्तिभ्रमेणार्थप्रत्यायकत्वरूपासाधुत्वस्य च वक्तुं शक्यत्वात्, भाषाशब्दानां तु प्रयोगप्रत्यययोरशक्तिशक्ति(जत्व)भ्रमाभ्यामुपपत्तेर्लक्षणागौण्योश्च शक्यार्थान्तराभावादनुपपत्तेर्न वृत्तिप्रमेति न तत्तत्साधुत्वम्, डित्थादिपदानां टिघुभादीनां च 'द्वादशेऽहनि पुत्रस्य नाम कुर्यादि'ति पुत्रत्वनामत्वोपाधिना 'व्याकृता वागुद्यत' इति विधिना व्याकृतत्वव्याकरणत्वोपाधिना चानादिवृत्तिप्रमासम्भवान्नाव्याप्तिः।

पौरुषेयसङ्केतविरहविशिष्टत्वं साधुत्वम् टिघुभादिशब्दानां तु साध्वसाधुबहिर्भूतत्वमेवेति सोमेश्वरः(३)।

अतः श्रुतिमूलत्वसम्भवात्प्रामाण्यम्, साधुत्वग्रहश्च व्याकरणा-

---

मयूखः।

( १ ) व्याकरणस्येति। कलिना दृष्टं साम कालेयं वामदेवेन दृष्टं साम वामदेव्यम् इति व्याकरणेन प्रतिपाद्यते श्रुत्या तु अन्यथेति विरोध इति भावः।

( २ ) न्यायविरोधादिति। अखण्डं वाक्यं वाक्यार्थे शक्तमिति वैयाकरणमतम युक्तं तद्यथा अखण्डं वाक्यं हि शुद्धवर्णव्यङ्ग्यमानुपूर्वीविशिष्टवर्णव्यङ्ग्यं वा नाद्यः सरो रस इत्यादौ वर्णभेदाभावनार्थविशेषप्रतीत्यनापत्तेः नान्त्यः आनुपूर्वीविशेषविशिष्टानां वर्णपदादीनामेव वाक्यत्वोपपत्तावखण्डवाक्यस्वीकारे मानाभावात् पदवर्णादिप्रत्ययस्य वाक्ये भ्रान्तित्वकल्पनस्यान्याय्यत्वाच्चेति न्यायविरोध इति भावः।

( ३ ) वृत्तीति। सा च शक्तिलक्षणागौण्यन्यतमरूपा।

( ३ ) सोमेश्वर इति। हरिरप्याह—यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः। कथं तु तासां साधुत्वं नैव ताः साधवो मताः॥ अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता। हस्तचेष्टा यथा लोके तथा संङ्केतिता इमाः॥ ततश्चासां नाभ्युदयः प्रत्यवायोऽपि वा भवेत्। लाघवेनार्थबोधार्थं प्रयुज्यन्ते तु केवलम्॥ इति।

भ्यासहकृतेनार्थप्रत्ययानुपपत्तिसहकृतेन च श्रोत्रेन्द्रियेणेति नानुपपत्तिः एवं च सोमप्रकरणस्थः 'तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः' इति 'नानृतं वदेत्' इति चापशब्दनिषेधः संगच्छते' न चायं म्लेच्छभाषाविषयः-हेऽलयो हेऽलय इत्युपक्रमस्थार्थवादे रेफस्थाने लकारोच्चारणनिन्दयाऽपशब्दमात्रविषयत्वात् । यदि चैतस्य(१)क्रत्वर्थत्वं, तदा 'यस्तु प्रयुङ्क्ते' (२)इतिभद्रकारिकोक्तसाधुभाषणनियमापशब्दनिषेधयोः पुमर्थत्वम् , तस्मादीदृशवेदमूलत्वेन व्याकरणस्मृतेः प्रामाण्यम् , वेदन्यायविरोधे त्वप्रामाण्यमिष्टमेव ।

शब्दे गाव्यादिपदे स्वरवर्णहेतुप्रयत्नेनोच्चारणाभावात् शक्तिभ्रमरूपापराधभागित्वम् अतो न सर्वेषां वाचकत्वमित्यर्थः ।

## लोकवेदाधिकरणम् ।

### प्रयोगचोदनाभावादर्थैकत्वमविभागात्स्यात् ॥ २७ ॥

#### प्रभा ।

उत्तराधिकरणोपोद्घातसंगत्या लोकवेदयोः शब्दैकार्थत्वमिह प्रतिपाद्यते—**प्रयोगचोदनाभावात्** प्रयोगेषु याश्चोदना गां दद्यात् इत्यादयस्तासां भावात्सद्भावात् **अविभागात्** प्रत्यभिज्ञया 'यो लोकेऽस्माभिः श्रुतः स एवायं गोशब्दः' इत्येवंरूपया लौकिकवैदिकशब्दयोरेकत्वावगमात् **अर्थैकत्वम्** अर्थस्य वैदिकगवादिशब्दार्थस्य लौकिकगवादिशब्दार्थेन सह एकत्वमभिन्नत्वं **स्यात्** ॥ २७ ॥

( संशयः )

प्रसङ्गाल्लौकिकवैदिकपदानां भेद उताभेद इति (३)चिन्ता ।

---

#### मयूखः ।

( १ ) एतस्य—नानृतं वदेदिति निषेधस्य ।

( २ ) यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥ इति कारिका ।

( ३ ) प्रसङ्गादिति । एवं व्याकरणप्रामाण्ये समाहिते इदानीं कात्यायनादिप्रतिपादितस्य व्यक्तिरेव वाच्येति पक्षस्य प्रसक्तं प्रामाण्यमपोद्यते इति अपवादसंगतिरत्र बोध्या । प्रसङ्गादिति च अपवादसङ्गतेरप्युपलक्षणम् । नन्वेवमाकृत्यधिकरणमेव प्रथमं निरूपणीयं न तु लोकवेदाधिकरणमिति चेन्न—आकृत्यधिकरणोपोद्घातत्वेन मध्ये लोकवेदाधिकरणस्य सङ्गतत्वात् ।

( पूर्वपक्षः )

यूपाहवनीयादिपदानामर्थ(१)भेदेन, सरो रस इत्यादिषु क्रमभेदेन, ब्रह्म ब्राह्मण इत्यादौ वर्णन्यूनत्वाधिकाभ्यां, स्थूलपृषतीमित्यादौ कर्मधारयबहुव्रीहिनिर्णायकस्वरभेदेन, हरिं भजते देहीत्यत्र व्यधिकरणपदसन्निधानेन कृदन्ताकृदन्तपदनिर्णयेन च प्रसिद्धयूपगोघटाग्न्यादिपदानामर्थाभेदेऽपि स्वरस्वाध्यायपाठादिधर्मभेदेनाप्रसिद्धयूपादिपदसामानाधिकरण्येन 'उत्ताना वै देवगवा वहन्ती'त्यार्थवादिकोक्तानवहनकर्तरि गोपदवाच्यताबोधादर्थान्यत्वेन च पदान्यत्वमिति चेन्न—

( सिद्धान्तः )

प्रत्यभिज्ञानबलेन तदैक्यावधारणात्, अर्थभेदानापादकस्वरादेर्यूपादिपदसामानाधिकरण्यस्य चाप्रयोजकत्वात्, उत्तानवाक्यस्यार्थवादत्वादिति(२) अतः पदैक्यम्(३) ॥

आकृत्यधिकरणम् ।

**अद्रव्यशब्दत्वात् ॥२८॥ अन्यदर्शनाच्च ॥ २९ ॥ आकृतिस्तु क्रियार्थत्वात् ॥३०॥ न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् तदर्थत्वात्प्रयोगस्याविभागः ३१॥**

प्रभा

पूर्वाधिकरणे सिद्धान्तसूत्रमपि तन्त्रेण पूर्वपक्षसूत्रम् **प्रयोगचोदनाऽभावात्** जातौ प्रयोगचोदनायां गौरनुबन्ध्य इति गवानुबन्धनानुष्ठानविधेरभावात् असंभवात् **अर्थैकत्वं** व्यक्तेरेव पदार्थत्वं न जातेः **स्यात् अविभागात्** क्वचिज्जातिः क्वचिद्व्यक्तिरर्थ इति विभागस्यान्याय्यत्वात् ॥ २७ ॥

---

मयूखः ।

( १ ) पदैक्यमिति । नन्वयं विचारो निष्फल इति चेदुच्यते यदि लोकवेदयोः शब्दान्यत्वं तदोपायाभावेन वैदिकशब्दशक्तिग्रहस्यासम्भवाद् जातौ व्यक्तौ वा शक्तिरित्येवं भूतस्याग्रिमाधिकरणस्यानुत्थितिः स्यात् एकत्वे तु लोके वृद्धव्यवहारेण गृहीता शक्तिर्वेदे-फलिष्यतीति युक्ताग्रिमाधिकरणचिन्तेत्यग्रिमाधिकरणस्योपोद्घात इदमधिकरणमिति बोध्यम् ।

( २ ) यूपाहवनीयेति । तदाहुः—पदावधारणोपायान् बहूनिच्छन्ति सूरयः । क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः ॥ इति वार्तिककृतः। वाक्यं व्यधिकरणपदसन्निधिः श्रुतिः—समानाधिकरणपदसान्निधिः यथा यातः पुनरायातीत्यत्र यात इत्यस्य कृदन्तत्वनिर्णयः । स्मृतिर्व्याकरणं यथा अश्वस्त्वं देवदत्तेत्यत्र आगच्छेत्यर्थकं न त्वश्वार्थकम् ।

( ३ ) अर्थवादत्वादिति । रोदनार्थवादवदन्यार्थपरत्वमितिभावः ।

**अद्रव्यशब्दत्वात्**—गवादिपदानां जातिवाचकत्वे द्रव्यशब्दत्वाभावप्रसङ्गः स्यात् तथा च लिङ्गसंख्याद्यन्वयायोग· स्यात् इति 'एकां गां दद्यात्' इति श्रुत्यसंगतिः॥२८॥

'यदि पशुरुपाकृतः पलायेतान्य तद्वर्णं तद्वयसमालभेत' इत्यत्र **अन्यदर्शनाच्च** अन्यपदश्रवणादपि आकृतेर्न वाच्यत्वमाकृता ( पशुत्वे ) आकृति ( पशुत्व ) भेदासंभवादिति व्यक्तिरेव वाच्या ॥ २९ ॥

सिद्धान्तयति **आकृतिस्तु** जातिरेव गवादिशब्दार्थः न व्यक्तिः कुतः **क्रियार्थत्वात्** आकृतेर्वाच्यत्वे 'श्येनचितं चिन्वीत' इत्यादिवाक्यानां श्येनसदृशाग्न्याख्यस्थण्डिलविशेषनिष्पादकचयनादिक्रियाप्रतिपादकत्वमसम्भवात् व्यक्तेर्वाच्यत्वे तदसम्भवात्।३०।

क्रिया प्रोक्षणादिरूपा जातौ **न स्यादिति चेत्** एवं 'यदि पशुरुपाकृतः पलायेतान्यं तद्वर्णं तद्वयसमालभेत' इति **अन्यान्तरे** अन्यस्मिन्पशुपदार्थे विधानमुपाकरणविधिर्न स्यादिति चेत् तथा **द्रव्य** 'एकां गां दद्यात्' इत्यादौ लिङ्गसंख्याद्यन्वययोग्यं द्रव्य च न प्रतीयते इति **चेत् न प्रयोगस्य** प्रोक्षणादेः **तदर्थत्वात्** लक्षणया व्यक्तिरूपार्थपरत्वात् **अविभागः** जातिशक्तिपक्षभङ्गो न ॥ ३१ ॥

इति जैमिनिसूत्रवृत्तौ प्रभायां प्रथमाध्यायस्य तृतीयः पादः ।

( संशयः )

**इदमिदानीं चिन्त्यते घटादिपदानां जातिविशिष्टव्यक्तौ व्यक्तिमात्रे जातिमात्रे वा शक्तिः ॥**

( पूर्वपक्षः )

**ननु क्रियाद्वित्वादिसंख्यालिङ्गाद्यन्वययोग्यत्वाद्व्यक्तिरेव वाच्या, न च शक्त्यानन्त्यं जातेरुपलक्षणत्वात्, एवं च शक्यतासम्बन्धेन गोपदप्रकारकगोविशेष्यकशक्तिग्रहो गोत्वविशिष्टबोधजनकः न तु पदप्रकारकगोत्वविशेष्यकः गोत्वत्वस्य धर्मितावच्छेदकत्वे गौरवात्। उपलक्षणत्वेन त्वनभिधेयमिति धर्मितावच्छेदकस्य गोत्वादेर्भानम्। विशिष्टवाचित्वे तु न कोऽपि दोष इति चेन्न—**

( सिद्धान्तः )

**व्यक्तीनामनन्तत्वेनानन्तशक्तिकल्पनापत्तेः । न चोपलक्षणैक्येन तदनापत्तिः। अक्षादिपद इव शक्यतावच्छेदकतया शक्त्यानन्त्यात्। किञ्च(१) पदविशेष्यकगोत्वप्रकारकशक्तत्वसंसर्गनिश्चयस्य वि·**

---

मयूखः ।

( १ ) किञ्चेति । गोत्वशक्तं गोपदमिति पदविशेष्यकशक्तिग्रहस्य विशिष्टबोधे हेतुत्वम् । न च गोत्वस्य स्वरूपत· प्रकारता समवायेनैवेति वाच्यम् 'अय गौ.' इत्यनन्तरं गोत्वेनेमं जानामीतिगोत्वप्रकारकज्ञानवानहमित्यनुव्यवसाये प्रकारितासम्बन्धेन स्वरूपत एव गोत्वस्य प्रकारतावगाहनेन त्वदुक्तनियमस्यासम्भवात्। न च समवायेन धर्मिविशेषणस्यैव

शिष्टबोधहेतुत्वकल्पने जातौ निरवच्छिन्नप्रकारताङ्गीकाराद्गोत्वत्वस्य प्रकारतावच्छेदकत्वकल्पनाभावाल्लाघवम्। न चैवं पदं गौरिति प्रत्यापत्तिः, पदवती गौरितिवदिष्टत्वात्। अतो जातिरेव वाच्या। विशिष्टवाचित्वं तु नागृहीतविशेषणान्यायपरास्तम्।

व्यक्तिभानस्य(१) तु जात्यात्मना व्यक्तौ शक्त्यङ्गीकारेणोपपत्तिरिति सोमेश्वरः।

जाति(२) शक्तेर्व्यक्त्युद्देश्यकत्वेन व्यक्तिभानमिति भवदेवः। लक्षणया(३) व्यक्तिभानम्। न च युगपद्वृत्तिद्वयविरोधः। क्रमिकबोधे तस्य दोषत्वादिति नव्याः। विवृतं चेदं प्राक्॥

इति गागाभट्टविरचिते भाट्टचिन्तामणौ प्रथमाध्यायस्य स्मृतिपादाभिधस्तृतीयः पादः।

---

मयूखः।

गोत्वादेः स्वरूपतः प्रकारत्वमिति वाच्यम्। गोत्वशक्तं गोपदमित्यत्रापि गवादिविशेषणतापन्नस्य गोत्वस्य निरूपितत्वसम्बन्धेन गवादेश्च स्वसमवेतनिरूपितत्वसम्बन्धेन शक्तौ विशेषणत्वोपगमेनादोषादिति।

( १ ) ननु यदि शब्दानां जातावेव शक्तिस्तर्हि व्यक्तिबोधः कथमत आह—व्यक्तिभानस्येति। अयम्भावः यथा घटे घटत्वम् इह शुक्लत्वम् इत्यादिप्रत्ययाज्जातिव्यक्त्योर्भेदस्तथा अयं गौः अयं शुक्ल इत्यादि प्रतीत्याऽभेदोऽपि, न चैवं व्यक्त्यभेदे जातेरनित्यत्वं स्यादिति वाच्यम् जात्यात्मना नित्यत्वेऽपि व्यक्त्यात्मनाऽनित्यत्वस्येष्टत्वेनादोषात् एवं च घटादिपदानां जातिवाचित्वेऽपि जातिव्यक्त्योरभेदाज्जात्यैव व्यक्तिप्रतीतिरिति। नन्वेवं व्यक्तेर्जात्याऽभेदे व्यक्तेरपि वाच्यत्वापत्त्याऽधिकरणवैयर्थ्यमत आह—जात्यात्मनेति। व्यक्तेर्वाच्यत्वेऽपि न व्यक्त्यात्मना वाच्यत्वमपि तु जात्यात्मनेति नाधिकरणवैयर्थ्यमिति भावः।

( २ ) जातिशक्तेरिति। अयम्भावः जातिव्यक्त्योरभेदेऽपि जातिशक्तेः साक्षाद्विषयतासम्बन्धो जातौ उद्देश्यताख्यविषयतासम्बन्धस्तु व्यक्तौ सर्वैर्व्यक्तिमुद्दिश्यैव शब्दप्रयोगात् ततश्च यथा 'यजेत स्वर्गकाम' इत्यत्र एकैव यागकृतिः यागविषयिणी स्वर्गोद्देश्यिका चेति न भेदं प्रतिपद्यते उभयोत्पादिका च भवति तथा एकैव घटपदशक्तिः घटत्वविषयिणी घटोद्देश्यिका च न भेदं प्रतिपद्यते उभयप्रतिपादिका च एवं च घटत्वबोधं घटबोधं च प्रति घटत्वशक्तिज्ञानं करणमिति स्वीकारात् जातिशाब्दबोधत्वमिव व्यक्तिशाब्दबोधत्वमपि घटत्वशक्तिज्ञानस्य कार्यतावच्छेदकमिति।

( ३ ) ननु कार्यतावच्छेदकद्वयकल्पने गौरवं जातिव्यक्त्योर्बोधस्य क्रमिकत्वापत्तिः

# अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

## ( नामधेयपादः )

## (१) उद्भिदधिकरणम् ।

**उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥**

**अपि (१)वा नामधेयं स्याद्यदुत्पत्तावपूर्वमभिधायकत्वात्॥२॥**

प्रभा

प्रमाणाध्यायस्य प्रथमे पादे विधेः द्वितीये पादे अर्थवादमन्त्रयोः तृतीये पादे विध्यर्थवादमन्त्रमूलकस्मृत्यादीनां प्रामाण्यं विचार्य चतुर्थे पादे नामधेयभागस्य प्रामाण्यं विचार्यते तेन विध्युद्देशगतपदविशेषप्रामाण्यनिरूपणमेतत्पादार्थः ।

**समाम्नायैदमर्थ्यं**—समाम्नायस्य कृत्स्नस्य वेदस्य ऐदमर्थ्यम् धर्मप्रमितिजननार्थत्वम् **उक्तम्**—तद्भूतानामिति अर्थवादाधिकरणे व्यवस्थापितम् **तस्मात्**—तथाव्यवस्थापितत्वात् **सर्वं**—गुणवाचित्वेन नामधेयत्वेन वाऽभिमतं कृत्स्नमेव उद्भित्सोमादिपदं **तदर्थं**—गुणत्वेन नामत्वेन वा धर्मप्रमितिजननार्थं **स्यात्** ततश्चाध्ययनविधिपरिगृहीतस्य नामधेयस्यापि विध्येकवाक्यतया प्रामण्यमित्येतावदिहाधिकरणे स्थितम् ॥१॥

**यत्**-यतः **उत्पत्तौ** उद्भिदा यजेतेत्यादौ विधिवाक्ये **अपूर्वं** ज्योतिष्टोमाद्यागान्तरपरमुद्भिदादिपदम् **अपि वा नामधेयम्**—नामधेयं स्यात् नतु गुणविधिः कुतः **अविधायकत्वात्** नामत्वसम्भवे गुणविधायकत्वस्य मत्वर्थलक्षणादिभयेनासम्भवात् ॥२॥

---

मयूखः

क्रमिकत्वाङ्गीकारे च वैशिष्ट्यबोधाभावेन निर्विकल्पकत्वरूपापत्तिरतो नव्यमतमाह—लक्षणयेति । दोषत्वादिति । अयम्भावः यथा गङ्गापदाच्छक्यप्रवाहोपस्थितावपि तस्य घोषाद्यन्वयप्रमितेः प्रागेवानुपपत्त्या तीरलक्षणायामपि न वृत्तिद्वयविरोधः एवमत्रापि शक्त्या जात्युपस्थितावपि तस्याः कर्मत्वान्वयप्रमितेः प्रागनुपपत्तिवशाद्व्यक्तिलक्षणायामपि न क्रमिकवृत्तिद्वयविरोधः सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति न्यायस्यापि नायं विषयः यत्रान्वयप्रमोत्तरं तस्यैव पदस्य वृत्त्यन्तरेणार्थान्तरप्रत्यायकत्वं तत्रैव तत्प्रवृत्तेरिति ।

इति भाट्टचिन्तामणिमयूखे प्रथमाध्यायस्य तृतीयः पादः समाप्तः ।

---

( १ ) भाष्यकारेण उक्तमिति सूत्रेण पूर्वपक्षं कृत्वा अपिवेति सूत्रेण नामधेयत्वं सिद्धान्तितं तदनुरोधेन भाट्टचिन्तामणिकृतापि एकमिदमधिकरणमित्यङ्गीकृतम् । वार्तिककारेण तु सूत्रद्वयेनाधिकणद्वयमित्यङ्गीकृतम् ।

( संशयः )

"उद्भिदा यजेत" इत्यादिविधिश्रुतानामपौरुषेयाणां (१)स्वाध्याय- विध्यध्यापितानामुद्भिदादिपदानां योगेन कथञ्चि(२)त्खनित्रादिसमर्प काणां विधेयगुणसमर्पकत्वमुत कर्मनामत्वमिति चिन्ता ।

( पूर्वपक्षः )

ननु 'अथैष भूर्वैं वैश्वदेव' इत्यादिविहितेष्वनेकदेवतादिगुणविशिष्ट- कर्मकद्रव्यकेषु गुणविधिः(३), अव्यक्तत्वानुमानापेक्षया बलवत्त्वात्, एतेन लौकिककर्मापेक्षयाऽप्रामाण्यापत्तिरपास्ता । अस्तु वा विशिष्टवि- धिः(४) गुणफलसम्बन्धविधिः(५) विशिष्टकर्मान्तरविधिर्वेति(६) चेन्न–

( सिद्धान्तः )

प्रकरणसन्निध्या(७)द्यभावेन तदुपस्थितेः, धात्वर्थविधिसम्भवे

---

मयूखः ।

( १ ) गुणे कर्मणि च तुल्यवद्वृत्तिकोद्भिदादिपदघटितानीहाधिकरणे विषयः ।

( २ ) कथं चिदिति । उद्भिनत्ति अनेनेति उद्भित्खनित्रमिति योगेनेत्यर्थः ।

( ३ ) गुणविधिरिति । 'भिदिर् विदारणे' इति स्मृत्या विदारणे समर्थखनित्रादिवच- नत्वप्रसिद्धेर्नामधेयत्वे वैयर्थ्यप्रसङ्गाच्च गुणविधित्वमुचितं तत्रैषां वाक्यानां ताण्ड्यशाखायां ज्योतिष्टोमानन्तरमेव पाठात् प्रकृतज्योतिष्टोमयागानुवादेनैव दध्ना जुहोतीति गुणविधानं भविष्यतीति भावः ।

( ४ ) अस्तु वा विशिष्टविधिरिति । स्वर्गनिरूपितत्वेन यागस्य गुणस्यापि व्यापार- भेदेन भावनायां करणत्वेनान्वयोपपत्त्या यागस्य फलनिष्पादनद्वारा भावनाकरणत्वेऽपि सोमादेः करणान्तरस्य 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यादिना समादेरधिकरणान्तरस्यैव यागनिष्पादनद्वारा भावनासम्बन्धे बाधकाभावात्तथैव प्रथमावगताभावनासम्बन्धनिर्वाहाय अरुणैकहायनीवद्यागस्य पार्ष्ठिको यागसम्बन्धः कल्प्यते तेन न मत्वर्थलक्षणापत्तिरिति वि- शिष्टविधानं युक्तमिति भावः ।

( ५ ) गुणफलसम्बन्धविधिरिति । प्रकृतसोमयागाश्रितः खनित्रादिगुण एव फलोद्दे- शेन विधीयते काम्यत्वादेवं च नित्यसोमबाध इति गुणफलसम्बन्धविधिरित्यर्थः ।

( ६ ) विशिष्टकर्मान्तरविधिरिति । उद्भिद्वता यागेन पशून् भावयेदित्येवं विशिष्टक- र्मान्तरविधिरिति भावः ।

( ७ ) प्रकरणसन्निध्यभावादिति । ताण्ड्यके अग्निष्टोमसंस्थाकस्य ज्योतिष्टोमस्य षष्ठे- ऽध्याये पठितत्वेन तदनन्तरपठितैः द्वादशाहादिभिः प्रकरणस्य विच्छेदात् षोडशे स्तुत्यर्थं दक्षिणाविधानार्थं च पुनरुपादानेऽपि तदनन्तरपठितैः एकाहादिभिः राजसूयादिभिश्च पुनः प्रकरणस्य विच्छेदात् एकोनविंशे पठितानामुद्भिदादीनां प्रकरणं नास्तीति भावः ।

तृतीयविधि(१)प्रकारस्यान्याय्यत्वाच्च, फलपदस्यानन्वयापत्तेश्च गुण-फलसम्बन्धविधिस्त्वाश्रयालाभादेवायुक्तः सप्तमविधिप्रकारोपपत्तेश्च, नापि विशिष्टविधि -मत्वर्थलक्षणापत्तेः तथा हि सर्वकारकाणां व्युत्पत्तिसिद्धे भावनान्वये फलकर्मत्वस्य धात्वर्थकरणत्वस्य निरूपकापेक्षायां फलनिरूपितधात्वर्थकरणत्वं प्रतीयते, यथोपश्लेषेण शीघ्रोपस्थितत्वात्, एवं च करणत्वेन प्रतीयमानस्य धात्वर्थस्य कर्मतया प्रतीत्यभावात्सोमादेः कारकान्वयस्य वान्वयासम्भवाद्भिन्नार्थयोश्च सामानाधिकरण्यायोगात्प्रतीतसम्बन्धसामान्योपपत्त्यर्थं मत्वर्थलक्षणावश्यकीति करणद्वयासमवेशान्मत्वर्थलक्षणेति।

अन्ये-खले कपोतन्यायेन सर्वकारकाणां भावनायामेवान्वयः, तत्र च कस्यचित्साक्षात्सम्बन्धेन कस्यचित्परम्परासम्बन्धेनान्वयसिद्धेः मत्वर्थलक्षणाया नोपयोग इत्याहुः।

परं त्वेतन्मते सोमादेरिन्द्रियार्थदध्न इव स्वर्गाद्यङ्गतापत्त्या प्राधान्यापत्तिः, एवं च प्रतिनिध्युपादानं न स्यात्, न च विशेषणविधिना यागाङ्गताबोधः-परम्परासम्बन्धविशेषबोधे विशेषणविधिकल्पनाया अनावश्यकत्वात्, मम तु मत्वर्थलक्षणया सम्बन्धसामान्यसिद्धावव्यङ्गत्वरूपसम्बन्धविशेषसिद्ध्यर्थं तत्कल्पनमावश्यकम्, एवं च तुल्यविभक्तिककारकयोः परस्परविशेषणविशेष्यभावापन्नयोरेव भावनायामेवान्वय इति वेदितव्यम्।

न चास्तु कारकाणां क्रियायामेवान्वयः सोमकरणकयागकरणिका भावनेति बोध इति वाच्यम्—कारकप्रकारकबोधे मुख्यविशेष्यतासम्बन्धेन भावनोपस्थितेर्हेतुत्वकल्पने लाघवात्, न च तेन सम्बन्धेन क्रियोपस्थितेरेव हेतुत्वं वक्तुं शक्यम्-धात्वर्थानुवादेन गुणविधौ फलसम्बन्धविधौ च भावनान्वयावश्यकतयाननुगतान्वयस्य तदनुरोधे-

---

मयूखः।

(१) तृतीयविधिप्रकारस्येति। शुद्धधात्वर्थकरणकभावनाविधिराद्यः। यथाग्निहोत्रं जुहोति। अन्योद्देशेन धात्वर्थकरणकभावनाविधिर्द्वितीयः। यथा-अग्निहोत्रं जुहुयात्स्वर्गकामः इति, व्रीहीन् प्रोक्षति इति च। धात्वर्थान्यकरणकभावनाविधिस्तृतीयः। यथा दध्ना जुहोति। धात्वर्थं साधुत्वार्थमनूद्यापि अन्योद्देशेनान्यकरणकभावनाविधिश्चतुर्थः। यथा दध्नेन्द्रियकामस्य जुहुयात्। गुणविशिष्टधात्वर्थकरणकभावनाविधानं पञ्चमः। यथा सोमेन यजेत। अन्यत्र गुणविशिष्टधात्वर्थकरणकभावनाविधिः षष्ठः। यथा सौर्यं चरु निर्वपेद्ब्रह्मवर्चसकामः। तत्र तृतीयविधिप्रकारो गुणविधिपक्षो न युक्त इत्यर्थः।

नानुगतहेतुकल्पनस्य चान्याय्यत्वात्, अतो भावनान्वये मत्वर्थलक्षणा-वश्यकीति। इयं च प्रकृतिभागे।

अन्ये तु तृतीयार्थकारस्यैव विधेयतया तृतीयया तृतीयान्तेन वा लक्षणेत्याहुः।

पर विभक्त्यतिरिक्ततृतीयार्थलक्षणापत्त्या न युक्तम्। इयं च लक्षणा-विधाने वानुवादे वेति वार्तिकाद्विशिष्टधात्वर्थविधौ धात्वर्थोद्देशेन गुण-विधावपीति प्रतियन्ति वृद्धाः।

तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चतीत्युत्तरार्धानुरोधेन तृतीया-न्तानामेवोपपदवदनुवादवाक्य एव करणत्वेनान्वयात् न सर्वत्रानुवाद वाक्ये लक्षणेति युक्तम्, अतो विशिष्टविधि मत्वानुवादवाक्ये लक्षणेति पितृचरणाः।

अप्रसिद्धार्थकस्य (१)फलप्रकाशकत्वादिरूपयोगेन प्रसिद्धयजिसा-मानाधिकरण्येनान्वयसम्भवात्सोमादिपदवन्नानुपपत्तिः, श्रोत्रोपस्थित-संज्ञाया एव यागादिविशेषणतया यागादौ शक्यतासम्बन्धेनान्वयान्न मत्वर्थलक्षणापत्तिः, अतो यागनामत्वमुद्भिदादिपदानाम् प्रयोजनं गुण-फलादिसम्बन्धाविवक्षार्थबोधः कर्मभेदः सङ्कल्पादिलाघवं च।

यदुत्पत्ताविति (२)यदनुष्ठानेऽपूर्वोत्पत्तिः तत् नामधेयं गुणसमर्प-कत्वासम्भवादित्यर्थः।

## (२) चित्राधिकरणम्।

### यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ ३ ॥

**प्रभा**

**यस्मिन्**—'चित्रया यजेत पशुकाम' इत्यादिवाक्ये चित्रादिपदे गुणत्वनामत्वस-न्देहे सति **गुणोपदेशः**—गुणान्तरस्यापि श्रवणेन अनेकगुणविधानं सम्भाव्यते तस्य चित्रादिपदस्य **प्रधानतः**—प्रधानेन धात्वर्थेन क्रियया **अभिसम्बन्धः** सामानाधिकर-ण्यमन्यथा वाक्यभेदःस्यात् ॥ ३ ॥

---

**मयूखः।**

( १ ) सम्भाव्यमानवाक्यभेदाः इह ये लोके जातिगुणवचनतया निरूढाः कर्मण्य-पि योगवशेन सम्भवद्वृत्तयः 'चित्रया यजेत पशुकाम' इत्यादयस्ते उदाहरणम्।

( २ ) आदर्शपुस्तकस्थोऽयं यदुत्पत्तावित्यादिकः पाठोऽपपाठः 'यत् उत्पत्तौ प्रथमत एव अपूर्वम्—अर्थान्तरवाचकत्वेन निरूढं न भवति तत् नामधेयं गुणवि-धायकत्वासम्भवात्' इति तु युक्तः पाठः।

( पूर्वपक्षः )

'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इति प्रजापतिदेवताकतत्तद्द्रव्यकयागविधिसान्निध्याम्नाते' चित्रया यजेत पशुकाम' इति विधौ चित्रापदं विधेयगुणसमर्पकं स्त्रीत्वान्वययोग्यतया प्राणिद्रव्यकप्रकृतिभूताग्नीषोमीययागे चित्रत्वस्त्रीत्वरूपगुणविधिः ; तयोश्च पशुपरिच्छेदकतयैव यागाङ्गत्वम्, (१)उभयविशिष्टैककारकविधानाच्च न वाक्यभेदः, फलनिरूपितकरणत्वस्याप्राप्ततया (२)गुणफलसम्बन्धविधिर्वा, स्त्रीत्वानुवादसम्भवान्मेषीयागे (३)चित्रत्वगुणविधिर्वा, तदाश्रितचित्रत्वगुणस्य फलसम्बन्धविधिर्वा, पशुकामपदं यागोपायकामनानुवादः, प्रकृतप्राजापत्ययागसाधनधानानुवादेन(४)चित्रत्वविधिर्वा, निरूढत्वान्मत्वर्थलक्षणया (५)यागान्तरविधिर्वा ।

एवम् 'आज्यैः स्तुवते' इत्यत्राज्यपदं घृतरूपविधेयगुणसमर्पकं 'रथन्तरेण स्तुवते' 'यज्ञायज्ञीयेन स्तुवते' इति प्राप्तस्तोत्रेषु घृतविधिः, साधनत्वं च तस्य सन्निधिस्थापनादिद्वाराभ्यन्तरादिद्वारा वा लक्षणया प्रकाशकऋग्विधिर्वा, रथन्तरादीनां च तन्मन्त्राभिव्यञ्जकतयैव साधनत्वम्, एवं च तेषां स्तोत्रसाधनतया स्तोमत्वोपपत्तेः। 'पञ्चदशान्याज्यानि' इति पञ्चदशत्वसंख्याविध्युपपत्तिः, 'स्तोमे डविधिः पञ्चदशाद्यर्थः' इति डप्रत्ययोपपत्तिश्च ।

एवं 'पृष्ठैः स्तुवते' इत्यत्र पृष्ठ्यावयवविधिः तत्पदं न त्रीणि त्रित-

मयूखः ।

( १ ) ननु प्राप्तकर्मानुवादेनानेकचित्रस्त्रीत्वरूपगुणविधाने वाक्यभेदः स्यादत आह उभयेति । पशुना यजेतेतिवत् प्राप्तकर्मानुवादेनापि अनेकगुणविशिष्टतृतीयोपात्तैककरणकारकविधानसम्भवान्न वाक्यभेद इति भावः ।

( २ ) ननु कारकस्याप्युत्पत्तिवाक्यादेवावगतिः तथाच तदनुवादेन गुणद्वयविधाने वाक्यभेदतादवस्थ्यमत आह—फलनिरूपितेति ।

( ३ ) मेषीयागे स्त्रीत्वस्य प्राप्ततया चित्रत्वमात्रस्य विधाने लाघवमित्यभिप्रेत्याह—स्त्रीत्वानुवादेति । नच मेषीयागे क्लृप्तोपकारकप्रकृतकृष्णसारत्वादिगुणावरुद्धतयानारभ्याधीतचित्रताया निवेशासम्भव इति वाच्यम् कृष्णसारंगादिविधेः चित्रत्वाश्रयतया पक्षप्राप्तकृष्णसारंगादिगुणनियमार्थतया विरोधाभावेन निवेशसम्भवात् ।

( ४ ) यागानुवादेनेति । प्रकृते एव 'दधिमधुपयोघृतमुदकं धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमितियागे धानासु स्त्रीत्वप्राप्त्या तदनुवादेन चित्रत्वरूपगुणविधिरित्यर्थः । यागस्य मुख्यस्त्रीत्वाभावेऽपि शब्दगतत्वेन स्त्रीत्वव्यवहारः सिद्धान्तिनोऽभिमतः ।

यस्य धारयेति मन्त्रविधिर्वा, सप्तदशानि पृष्ठानीत्यत्र सप्तदशत्वविधिः पूर्ववत् ।

एवं 'बहिष्पवमानेन स्तुवते' इत्यत्र बहिष्पवमानयोग्यद्रव्यविधिः तस्य त्रिवृद्बहिष्पवमानमित्यत्र त्रिवृत्त्वाविधिना त्रिपुटी त्रिभण्डी(१) त्वनियम-विशिष्टस्तोमत्वविधिर्वेति पूर्वपक्षः ।

( सिद्धान्तः )

सिद्धान्तस्तु–अग्नीषोमीययागे गुणत्रयविधौ(२) वाक्यभेदः, रूपलिङ्ग-सामान्यविशिष्टकरणकारकस्य प्राप्तत्वादेव न विधेयत्वम् , मेषीयागे चित्रत्वविधिरप्यनुपस्थितेर्निरस्तः, धानास्वपि ताद्विधेरकत्वाविधिर्वेति विनिगमकाभावेन निरस्तः । सर्वत्र पशुकामपदानुपपत्तिः(३) प्राजाप-त्ययागे फलान्तरकल्पनागौरव तृतीयावाधप्रकाराय निश्चयगुणफलसं-बन्धविधिस्तु सप्तमविधिप्रकारापत्त्या निरस्तः, अतश्चित्रावाक्ये प्रा-जापत्ययागानां फले विधानम् , चित्रापदस्य चित्रद्रव्यकप्रक्षेपवत्त्व-योगेनेष्टिपदसामानाधिकरण्येनोपपन्नं स्त्रीलिङ्गत्वम् , एवं च प्राजाप-त्ययागविधिनैकवाक्यता भवति, अन्यथा वाक्यभेदःस्यादिति ।

एवमाज्यैः स्तुवत इत्यत्र घृताज्यपदवन्मन्त्रान्तरासम्भवात् , प-ञ्चदशवाक्ये संख्याविध्यसम्भवात्स्तोत्रभावनानुवादेनाभावविधौ वा-क्यभेदः, न चोक्तप्रकारेण तत्सम्भवः घृतनिष्ठसंख्याविधौ मन्त्रनिष्ठसं-ख्याविधौ वावयवदशपददशपदस्य घृतमन्त्रनिष्ठसंख्याभिधायकत्वेन स्तोमनिष्ठसंख्याभिधायकत्वाभावेन डप्रत्ययान्तत्वानुपपत्तेश्च, अत एव सप्तदशस्तोमं भवतीत्यादिप्रयोगः अतो गुणविधिनैकवाक्यत्वोप-पत्तेः, युक्तमाज्यपदस्याभिपयन्तेऽर्थवादप्रसिद्धयोगेन स्तोत्रनामत्वम् ।

एवं पृष्ठपदस्य 'आपो वा अग्निवयमार्छन् तासां वायुः पृष्ठे व्यवर्तत' इत्यर्थवादप्रसिद्धस्पर्शजन्ये च योगे स्तोत्रनामत्वम् । एवं स्तोत्र-वाचित्रिवृत्पदसामानाधिकरण्येन बहिष्पवमानशब्दस्यापीति डप्र-त्ययान्तौ ॥

---

मयूखः ।

( १ ) निरूढेति । चित्रात्वस्त्रीत्वावच्छिन्नद्रव्यविशिष्टकर्मणः फले विधानमितिभावः

( २ ) त्रिभण्डीति । त्रिभण्ड्याऽरपर्यायलतावचनस्त्रिवृच्छब्दो न तु त्रैगुण्यार्थकः अतस्त्रिभण्डिद्रव्यमेव पवनक्रियाविशिष्टं विधीयते इति न्यायसुधाकृतः ।

( ३ ) ननु अर्थप्राप्तसाधनीभूतपशुकामनानुवादः अग्नीषोमीययागस्य सर्वफलार्थ ज्योतिष्टोमाङ्गतया पशुरूपप्रधानफलानुवादो वा पशुकामपदमत आह प्राजापत्येति ।

नन्वाज्यैः स्तुवत इत्यादौ घृतपृष्ठयोः स्तोत्रजनकत्वासम्भवान्मा स्त्वाज्यादिरूपगुणविधिः, किन्तु पञ्चदशान्याज्यानीत्यादौ सख्याघृतेभयकरणकभावनाविधिरस्तु, आस्तां च तयोस्त्वाग्नेपात्नीवतामित्यादाविवान्यतराकाङ्क्षाया अरुणया पिङ्गाक्ष्येत्यादाविवोभयाकाङ्क्षाया अग्नये शुचय इत्यादाविव निराकाङ्क्षयोरपि एकक्रियान्वयेनैव परस्परमन्वयः, सा च भावनास्तोत्रावान्तरप्रकरणेन स्तोत्राङ्गम्, तदुत्पत्तिश्च स्थापनाभ्यजनादिरूपक्रियाकल्पनेनोत्पत्तिवाक्ये च तादृशसम्बन्धानुवादः, तेनाज्यादिपदानां विधेयगुणसमर्पकत्वमिति चेन्न—अवच्छेदकधात्वर्थाभावेन प्रयोजकव्यापाररूपभावनाविधानासम्भवात्, आक्षेपलभ्यभवत्यादिवाक्यसत्तायाः प्रयोज्यव्यापारतया भावनात्वाभावात्। न चात्र कारकश्रवणम्, तद्बोधककृदन्तादिपदं वा, येन भावना कल्प्येत, अत एव न स्थापनादिक्रियाकल्पनमपि, आज्यानामङ्गत्वानवगमात्। न चावान्तरप्रकरणेनाङ्गत्वावगमः, अव्यापारात्मकत्वेन द्रव्यस्य करणेनाविनियोगात्। न च त्रिवृत्वादिगुणानां सन्निधिरशनाङ्गत्वमिवाज्यानां स्तोत्राङ्गत्वं सम्भवति, तेषां रशनोपकारकत्वस्य लोकादवगमात्, आज्यानां दृष्टादृष्टान्यतरद्वारा स्तोत्रोपकारकत्वस्यानवगमात्, तेनावच्छेदकधात्वर्थाभावेन भावनाविधानासम्भवः, अतः पञ्चदशादिवाक्येष्वाज्यानुवादेन पाञ्चदश्यगुणविध्युपपत्तये तस्य स्तोत्रनामत्वम्, अन्यथा—स्तोत्रानुवादेनाज्यविधौ संख्याविधौ च वाक्यभेदापत्तिः, वाक्यभेदापेक्षया शक्तिकल्पनस्यैव लघुत्वात्, 'यदाजिमीयुस्तदाज्यानामाज्यत्वम्' इति वाक्यशेषबोधितत्वेन शक्तिकल्पनस्यातिलघुत्वाच्च, तस्मादाज्यैः स्तुवत इति विधिः सान्निधिपठिताग्नेयमैत्रावरुणेन्द्रैन्द्राग्नत्रित्वसाध्यस्तोत्राणामाज्यपदं नामधेयम्, पञ्चदशान्याज्यानीत्यादौ चतुर्ष्वपि पञ्चदशत्वविधानात्, एवं च पञ्चदशादिपदानां डप्रत्ययान्तत्वोपपत्तिः।

एवं पृष्ठपदस्यापि वाक्यभेदापत्त्या स्तोत्रनामत्वमुन्नेयम्। परं त्वत्राज्यादिवद्योगसमर्पको नार्थवादः। तथापीदं रूढमेव स्तोत्रनामधेयम्। न चापो वा ऋत्वियमार्च्छन् तासां वायुः पृष्ठे व्यवर्ततेति वाक्यशेषः वायुस्पर्शजन्यत्वेरूपयोगबोधक इति वाच्यम्, तस्य ततो वसु वामं समभवत्तद्वामदेव्यमित्यादि, तस्मात्पिता वामदेव्यं पुत्राः पृष्ठानीत्यन्तस्य बालाहिकपृष्ठसाधनरथन्तरादिसामसु वायुस्पर्शजन्यवामदेव्ययोर्व्युत्पत्तिकत्वेन पृष्ठशब्दवाच्यताबोधकतया सौमिकमाहेन्द्रादिस्तोत्रेषु शक्तिबोधकत्वाभावात्, तत्र च निरूढलक्षणाङ्गीकारान्नानेकार्थत्वमिति।

तत्प्रयोजनं च पृष्ठैरुपतिष्ठन्त इत्यादौ रथन्तरादिसामावाप्तिस्तद्धर्मा-वाप्तिश्च स्तोत्रधर्मतृचत्वावाप्तिश्च , अतः स्तौमिकस्तोत्रेष्वर्थवादबोध्य-योगाभावात्पृष्ठपदं रूढमेव , तच्च 'पृष्ठैः स्तुवत' इत्येतद्विधिसन्निधौ अभित्वेतिषट्सु तृचेषु सामषट्कमाम्नातम् अभित्वेति तृचे रथन्तरं, त्वामिद्धीति तृचे बृहत् , कायान इति वामदेव्यम् , तं वो दस्मेति नौध-सम् , अभि प्र वः सुराधसमिति श्यैतम् , तरोभिर्वो विदद्वसु इति कालेयम् , तत्र रथन्तरबृहतोर्वाचनिको विकल्पः , रथन्तरबृहद्यवस्थया व्यवस्थि-तनौधसश्यैतयोर्विकल्पः, तत्रेष्टपदं पृष्ठपरम् । सप्तदशानि पृष्ठानीत्या-दिगुणविधिषु षट्स्वपि प्रयुक्तमपि न मुख्यम् , किन्तु—रथन्तरबृहत्सा-मसाध्यस्तोत्र एव मुख्यम् , इतरेषु छत्रिपदवद्गौणम् , अन्यथा सात-मिकसर्वपृष्ठाधिकरणविरोधः, तत्र हि विश्वजित्सर्वपृष्ठो भवतीत्यत्र सर्वशब्दस्यानेकसापेक्षतया आतिदेशिकपृष्ठद्वयानुवादासम्भवात् , षा-डहिकपृष्ठस्तोत्रसाधनसामविधिः सिद्धान्तितः , अतः पृष्ठपदं द्वयोरेव मुख्यम् , अन्यत्र गौणमिति पार्थसारथिः,

राणकोऽप्येवं परन्तु तन्मते 'रथन्तरं पृष्ठं भवति बृहत्पृष्ठं भवति' इति नोत्पत्तिवाक्ये किन्तु पृष्ठैः स्तुवत इत्येव पाशानितिवत् अविव-क्षितबहुत्वकं पृष्ठोत्पत्तिवाक्यम् , तेनैकमेव पृष्ठं लाघवात् , बृह-द्रथन्तरवाक्ययोस्तु विशिष्टविधिगौरवापत्तेः साधनविधिः , तयो स्तु द्वारभेदेन समुच्चयापत्तेर्विकल्पविधिः, एवं च पृष्ठस्तोत्रस्यैक्येन सर्वपृष्ठशब्देनानुवादासम्भवात्षाडहिकपृष्ठविध्युपपत्तिरित्याह ।

अन्ये तु पृष्ठशब्दः षट्स्वपि मुख्यः साप्तदश्यादिविधौ पृष्ठशब्देन प्रकृतौ सर्वेषामनुवादात् , विकृतावपि वैरूप्यम् . मैत्रावरुणस्य पृष्ठं शाक्वरमच्छावाकस्येत्यनुवादाच्च , न च तत्र लक्षणा मानाभावात् । न चैवं विकृतौ वैराजं पृष्ठं भवतीत्यादौ चतुर्ष्वपि वैराजनिवेशापत्तिः स्यादिति वाच्यम् , यत्र पृष्ठशब्देनानुवादो यत्र वा बहुव्रीह्यन्तसाम-शब्दप्रयोगः , तत्र रथन्तरबृहत्साध्यपृष्ठनिवेशाङ्गीकारात् , रथन्तरं पृष्ठं भवति यदि रथन्तरसामा बृहत्सामेत्यादिनिर्देशतुल्यतया तदुप-स्थितेः , पृष्ठैः स्तुवत इत्यनेन स्तोत्रप्राप्तेः , सन्निधिना तृचानां सा-मान्यविधिना च साम्नः प्राप्तेरनन्यप्रयोजनकं रथन्तरपृष्ठं भवतीत्या-देरेतन्मात्रप्रयोजनकत्वात् , अत एव कौत्सं भवति काण्वं भवतीत्यादौ कौत्सकाण्वादीनां स्तोत्रान्तरे निवेशो न पृष्ठसाधनत्वम् , न च सर्वपृ-ष्ठाधिकरणानुपपत्तिः, सर्वपृष्ठ इत्यनुवादानर्थक्यस्यैव तत्र बीजत्वात् ।

**तेन सर्वेष्वपि पृष्ठपदं मुख्यमित्याहुः—**

**एवं बहिष्पवमानशब्दस्यापि, तत्रापि त्रिवृद्बहिष्पवमानमिति वाक्ये त्रिवृत्पदवाच्यस्तोमस्य बहिष्पवमानवाच्यात्रिभिण्ड्यादेश्च विधौ वाक्यभेदात् ।**

**केचित्तु—बहिष्पवमानपदं यौगिकत्वादिह नोदाहरणम् किन्तु मत्वर्थलक्षणापत्त्या तन्नामत्वस्योद्भिदधिकरणविषयत्वमित्याहुः ॥**

**यस्मिन्—चित्रादिशब्दयुक्ते वाक्ये वाक्यभेदापादकस्य गुणस्योपदेशः तत्र प्रधाने कर्मणि अभिसम्बन्धः नामधेयत्वमिति सूत्रार्थः ।**

## ( २ ) तत्प्रख्याधिकरणम् ।

## तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

प्रभा

तत्प्रख्यम्—तस्य विधित्सितस्य अग्न्यादिरूपस्य गुणस्य प्रख्या प्राप्तिर्यस्मात् तादृशम् अन्यशास्त्रम्—शास्त्रान्तरम् 'अग्निर्ज्योति'रित्यादिकं यत्र अग्निहोत्रं जुहोतीत्यादौ वर्तते तत्राग्निहोत्रादिपदं कर्मनामधेयं च-एव नतु अग्न्यादिगुणप्रापकम् ॥४॥

( पूर्वपक्षः )

**अथाग्निहोत्रं (१)जुहोत्याघारमाघारयतीति गुणविधिः, अग्नये होत्रं हूयमानद्रव्यमस्मिन्निति बहुव्रीहिसमासेनाग्निरूपदेवताविधिः, स च दर्विहोमेषु विशिष्टविधिर्वा लक्षणाननुगतस्यापि(२) समासस्यागत्याश्रयणात् ।**

---

मयूखः ।

( १ ) इह ये रूढाः यौगिकाश्च सम्भावितविधित्सितगुणकाः शब्दास्ते उदाहरणम् । पूर्वाधिकरणोक्तवाक्यभेदात्मकगुणविधित्वनिराकरणहेतोरत्राभावेन पूर्वपक्षोत्थानात्प्रत्युदाहरणसङ्गतिरत्र । न च तद्व्यपदेशाधिकरणस्यापि प्रत्युदाहरणत्वाविशेषात् चित्राधिकरणानन्तरमारम्भप्रसङ्गः इति वाच्यम् यस्य यस्य यत्र सङ्गतिः तस्य तस्य तत्राभिधानमिति न नियमः सम्भवति अपि तु यत्र यदभिधीयत तत्र तस्य सङ्गतिरावश्यिकी इत्येवेति चित्राधिकरणस्याभिधीयमानस्य सङ्गतिसत्त्वेन तथोक्तेः । पुन उभयोः सङ्गतिसत्वे तदेव कुतो नोक्तमिति चेत् अशोकवनिकान्यायेनेति गृहाण ।

( २ ) लक्षणाननुगतस्येति । ननु जुहोतेरौणादिके कर्मणि त्रन्प्रत्यये कृते होत्रशब्दनिष्पत्त्या तस्य द्रव्यवचनत्वात् अग्निर्होत्रं यस्मिन्निति समानाधिकरणबहुव्रीह्यसम्भवः अग्नौ होत्रमस्मिन्निति व्यधिकरणबहुव्रीहिः सप्तमीविशेषणे बहुव्रीहाविति कण्ठेकाल इतिवत्कथं चित् संभवेऽपि अग्न्याद्यस्याधिकरणस्य यदग्नये जुहोति इत्यनेनैव प्राप्तेरविधीय-

एवमाघारशब्दोऽपि कर्मव्युत्पत्या क्षारणसमर्थघृतादिद्रव्यपरः, न त्वाघारणमाघार इति भावव्युत्पत्त्या धात्वर्थपरः, प्रवृत्तिनिमित्तभेदाभावेन नामत्वानुपपत्तेः(१), तस्याघारणरूपधात्वर्थसंस्कार्यत्वेनावगतस्य विनियोगाभावेन तदसम्भवाद्विनियोगो द्रव्यसापेक्षे उपांशुयाजादौ कल्प्यते अनेन च सामान्यतः क्षारणसमर्थद्रव्यमात्रे विहिते विशेषपरेण ध्रौववाक्येनोपसंहारः प्रयोजनं त्वभ्युदयशिरस्कत्वम्, इन्द्र ऊर्ध्वोऽध्वर' इत्याघारयतीत्यनेनाघारे मन्त्रः साधनतया विधीयते न तु देवताविधिः, तद्विधित्वेऽप्याश्रयिकर्मत्वोपपत्तिश्चतुर्गृहीतं वेति वचासि क्षारणान्तरविधिः वस्तुतः संस्कार्यत्वमात्रं न विनियोगकल्पकम् सक्तुष्वपि तदापत्तेः द्रव्यस्य प्रकरणेन विनियोगोऽप्यसम्भवीति, तथापि विशिष्टविधितया पूर्वपक्षो द्रष्टव्यः।

एवं चोभयत्र द्वितीयासंयोगे उपपद्यत अन्यथाधात्वर्थावाचित्वे तस्य विधेयतया करणत्वेनान्वयेन तृतीयान्ततापत्तिः, न च तवाप्याघारशब्दस्य करणद्रव्यवाचित्वात्तदापत्तिः, एतस्याघारस्य देवतासंयोगेन होमतया तृतीया च होश्छन्दसीति द्वितीयाया अपि करणत्वेऽनुशासनात्, अस्मिंश्च पक्षे चतुर्गृहीतक्यविहितसाधारणं प्रयाजाज्यसंस्कारः, इदं तु होमरूपपयःप्रभृतिकरणकस्रुवसाधनकमाराढुपकारकमिति पूर्वः पक्षः॥

( सिद्धान्तः )

सिद्धान्तस्तु—विधित्सितगुणप्रापकशास्त्रान्तरसद्भावेन तद्विध्यानर्थक्यापत्तेर्नामत्वम्, प्रापकशास्त्रान्तरं तु—अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति मन्त्रविनियोगविधिः मन्त्रप्रकाश्यदेवताया होमसंबन्धं विना मन्त्रस्य करणत्वानुपपत्तेः, तत्राप्याग्नेयनयेनोपभृथनयेन बहुविषयकस्यैव विधायकत्वाचित्याग्निश्चालिङ्गयोरेव प्रापकत्वामिति केचित्,

---

मयूखः।

मानत्वेन आश्रयणासम्भवः यश्चाश्रयितुं युक्तः अग्नये होत्रमस्मिन्निति चतुर्थीबहुव्रीहिः सच समासविधायकशास्त्राभावेन लक्षणाननुगतः अत आह—लक्षणाननुगतस्यापीति। स्थानुविधिश्छन्दसि भवतीत्याश्रित्य अगत्या चतुर्थीबहुव्रीह्याश्रयणमिति भावः।

(१) नामत्वानुपपत्तेरिति। प्रवृत्तिनिमित्तभेदाभावेन उद्भिदादिवैषम्यान्नामत्वानुपपत्तिरिति भावः। अत एव न तदधिकरणेन गतार्थतेति भावः।

तत्र प्रातर्होमेऽग्नेर्देवतात्वापत्तिः केवललिङ्गकमन्त्रवर्णविरोधश्च वि· भावनीयः । तेन विधिनियुक्तयोमिश्रलिङ्गयोर्गौणवृत्त्यान्यतरप्रकाशक त्वाङ्गीकारात्, केवललिङ्गयोरेव प्रापकत्वमुचितम्, यदग्नये च प्रजाप तये च सायं जुहोति यत्सूर्याय च प्रजापतये च प्रातरिति वाक्यं सायं कालादिति भिन्ने होमोद्देशेन प्रजापतिविधिः, अग्नेः पूर्वाहुतिः प्रजापते· रुत्तरेति क्रमविध्यन्यथानुपपत्तिप्राप्तसमुच्चयानुवादकश्चकारः, निमि· त्तसम्बन्धफलं तु कौण्डपायिनामग्निहोत्रे उपसदुत्तरकालीने निमि· त्ताभावेन प्रजापत्याहुतिनिवृत्तिः । एतेन विधिसमभिव्याहृतचतुर्थी· प्राप्तदेवताकेन मान्त्रवर्णिकदेवताप्राप्तिसम्भवः, मन्त्रयोरैन्द्रीवद्गौणता· कल्पनादित्यपास्तमिति मिश्राः ।

राणकस्तु—यदग्नये इति वाक्येन देवताप्राप्तिः, न च वाक्यभेदः, अग्नि· समुच्चयावशिष्टप्रजापतिविधानात्, चादिनिपातोपसर्गार्थानां समु· च्चयादीनामकारकतया साक्षाद्भावनान्वयाभावेन समभिव्याहृतपदा· र्थविशेषणत्वव्युत्पत्तेः, पदान्तरार्थस्यापि चार्थाद्यन्वयं विना भावना· विशेषणत्वायोगाच्च, यदि च निपातोपसर्गाणां द्योतकत्वं, तदा प्रजा· पतिपदलक्षिताग्निसाहित्यविशिष्टप्रजापतिविधानान्न वाक्यभेदशङ्कापि, न चैवं व्यासज्य देवतात्वापत्तिः, चतुर्थीद्वयेन निरपेक्षयोरेव देवतात्वबो· धात्, ऋग्विधानाच्च, अतो यदग्नये चेति वाक्यभेदेन देवताप्राप्तिमाह ।

दर्विहोमादिष्वपि मान्त्रवर्णिकदेवताप्राप्त्यैव न विधिः ।

एवं भिन्ने जुहोतीत्यादिष्वपि विशिष्टविधिस्तु गौरवादेवायुक्तः । अतो नामत्वम् ।

एवमाघारवाक्यविहितकर्मणे चतुर्गृहीतवाक्येन क्षारणयोग्यजौ· हवरूपद्रव्यविधानान्मान्त्रवर्णिकेन्द्रदेवताकत्वेन यागरूपस्यानर्थक्याप· त्त्याघारपदं नामधेयं न जौहवस्याघारसंस्कार्यतया गुणत्वमिति वाच्यम्, संस्कार्यस्यापि जनकतया गुणत्वात्, नियमविधिला· घवेन संस्कार्यतयान्वयायोगाल्लक्षणया करणीभूतद्रव्यविधिः । तेन न संस्कारकत्वमित्यन्ये ।

अत एव सान्नाय्ययागेनेन्द्रसंस्कारत्वम्, इन्द्रमहेन्द्रयोर्वैकल्पिक· त्वेन नित्यानित्यसंयोगविरोधाच्च, अतो नामधेयम् । द्वितीया त्वर्था क्षिप्तसाध्यात्मसमानाधिकरणकत्वे लाक्षणिकी साध्यत्वानिष्ठस्य वा कर णताबाधः, एवं साध्येनाग्निहोत्रेणेति बोधः' तत्प्रख्यं विधेयगुणप्राप· कशास्त्रान्तरवत्पदं कर्मनामधेयमित्यर्थः ।

## ( ४ ) तद्व्यपदेशाधिकरणम् ।

**तद्व्यपदेशं च ५ ॥**

प्रभा

तस्य विधित्सितस्य श्येनादिरूपस्य गुणस्य व्यपदेशः उपमानोपमेयभावानिर्देशो यत्र वाक्ये तत् तद्व्यपदेशं 'यथा वै श्येनः' इत्यादि वाक्यं यत्र वर्त्तते तत्रापि 'श्येनेनाभिचरन्यजेत' इत्यादौ विधित्सितगुणवाचकत्वेनाभिमतश्येनादिपदं कर्मनामधेयम् अत्र वाच्ये श्येनपदस्य गुणपरत्वे भेदगर्भउपमानोपमेयभावो नोपपद्येत कर्मनामत्वे श्येनपक्षिणः श्येनयागेन उपमानोपमेयभावः उपपद्यत इति भावः ॥ ५ ॥

( पूर्वपक्षः )

**श्येनानाभिचरन् यजेत गवाभिचरन् यजेतेति श्येनादिशब्दो गुणविधिः कर्मनामेति चिन्ता, तत्र रूढत्वात्सोमादिपदवद्गुणविधिरिति चेन्न;**

( सिद्धान्तः )

**'यथा वै श्येनो निपत्यादत्ते एवमयं भ्रातृव्यं निपत्यादत्त' इति कीर्तितश्येनसाम्येन स्तुत्यनुपपत्तिः, अभेदे सादृश्यानुपपत्तेः, उपमानान्तराभावरूपानन्वयोऽपि लक्षणापरत्वैव निरस्तः, एवं समानमितरच्छ्येनेनेति श्येनस्योपमानत्वानुपपत्तिश्च, न चोपक्रमस्थवैधश्येनपदे निरूढगौण्यङ्गीकारादुपसंहारस्थार्थवादिकोपमावाचकयथातथादिपदे लक्षणोचितेति वाच्यम्, एकपदलक्षणाया अनेकपदलक्षणातो लघुत्वात्, उपक्रमन्यायस्य तुल्यत्वविषयकत्वात्, तेन मुख्येऽपि श्येनपदेऽर्थवादोऽस्तु सादृश्येन गौणी व्याख्येति, अतो विधीयमानगुणव्यपदेशानुरोधेन नामधेयत्वम् ।**

**एवं यथा वै सन्दंशेन तद्दुरादानमादत्ते, यथा गावो गोपायन्तीत्यार्थवादिकव्यक्त्युपदेशवशेन सन्दंशगोशब्दयोर्नामत्वम् ॥**

## ( ५ ) वाजपेयाधिकरणम् ।

**नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् तुल्यत्वात्क्रिययोर्न ॥ ६ ॥ एकशब्दे परार्थवत् ॥ ७ ॥**

प्रभा ।

'वाजपेयेन स्वराज्यकामो यजेत' इत्यादौ **नामधेये** नामत्वेनाभिमते वाजपेयादिपदे वाजम् अन्नं पेयं यस्मिन्निति व्युत्पत्त्या **गुणश्रुतेः** यवागवादिरूपस्य गुणस्य श्रवणात् **तस्यैव विधानं** यागक्रियायां स्यादिति **चेत् न क्रिययोः** इष्टिवाजपेययोः **तुल्यत्वा**-

त् अन्नद्रव्यकतया तौल्यप्रसङ्गात् नचेष्टापत्तिस्तथासति द्रव्यघटितसादृश्येनैष्टिकविध्यन्तप्राप्तौ 'सप्तदशदीक्षो वाजपेय' इति सौमिकविध्यन्तानुवादलिङ्गदर्शनमनुपपन्नं स्यात् ॥६॥

किञ्च **एकशब्दे**—एकस्मिन्नाख्यातरूपे शब्दे यदा **ऐकशब्द्ये** इतिपाठस्तदा एकः शब्दः उच्चारणं यस्य यजेः स एकशब्दः तस्य भावः ऐकशब्द्यं तस्मिन्निति उक्त एवार्थः। गुणफलोभयान्वितार्थपरे स्वीक्रियमाणे तत् आख्यातपदं फलोद्देशेन स्वार्थस्य यागस्य विधानपरमिव **परार्थवत्** स्वार्थोद्देश्येन परार्थस्य गुणस्य विधायकमपि स्यादिति वाक्यभेदो विरुद्धत्रिकद्वयापत्तिर्वा स्यादित्यर्थः ॥ ७ ॥

( पूर्वपक्षः )

**नन्वस्तु वाक्यभेदतत्प्रख्यतद्व्यपदेशैर्नामत्वम्, अत एवाथैष ज्योतिरित्यादौ ज्योतिरादिपदवाच्यगुणानां प्रथमान्तपदार्थानां यजतिसमभिव्याहाराभावेन तदङ्गत्वेन विध्ययोगादेतेनेति वाक्यगतैतच्छब्देनोपस्थितानां गुणानां सहस्रदक्षिणगुणस्यापि च विधौ वाक्यभेदापत्त्यैव(१) ज्योतिरादिपदानां नामत्वम्, 'आज्यैः स्तुवत' इत्यत्रापि तत्प्रकाशकमन्त्रलक्षणापत्त्या नामत्वं मत्वर्थलक्षणापत्त्या नामत्वं तु न मृष्यामः, उद्भिदा यजेतेत्यादौ वाजपेयेन स्वाराज्यकामो यजेतेत्यादौ चोपपदार्थानां धात्वर्थान्वयाङ्गीकारेण(२) भावनाकरणद्वयान्वयासम्भवकृतमत्वर्थलक्षणायोगात्, तथा हि—द्रव्यादीनां सर्वकारकाणां कृतिरूपभावनाजनकत्वासम्भवात्तदन्वयासम्भवेन धात्वर्थ एवान्वयः, धात्वर्थस्यापि भावनावत्क्रियारूपतयैवाभिधानं न कारकतया, अतो न कर्मत्वकरणत्वादिकृतं वैरूप्यम्, अत एव न तस्य(३) भावनायां कारकत्वेनान्वयः, किन्तु—**

---

मयूखः।

( १ ) वाक्यभेदापत्त्यैवेति। अयं भावः 'अथैष ज्योतिः' इत्यादौ प्रथमान्तज्योतिरादिपदप्रतिपाद्यद्रव्यस्य यजतिपदसमभिव्याहाराभावेन यागाङ्गतया विधानासम्भव इति 'एतेन सहस्रदक्षिणेन यजेत' इति वाक्यघटकैतच्छब्देन ज्योतिरादिपदोपनीता गुणा ज्योतिष्टोमयागानुवादेन विधीयेरंस्तदा एतच्छब्दपरामृष्टगुणानां सहस्रदक्षिणायाश्च प्राप्तकर्मानुवादेन विधाने वाक्यभेदःस्यादिति चित्रान्यायेन ज्योतिरादिपदानां नामत्वमिति।

( २ ) धात्वर्थेति। अयमाशयः यदि धात्वर्थस्य यागस्य करणत्वमभ्युपगम्येत तदा गुणस्यापि करणत्वात् करणयोरन्वयो न भवेदिति तदर्थं मत्वर्थलक्षणाऽवश्यमभ्युपगन्तव्या स्यान्न चैवमस्ति यागस्य करणत्वप्रतिपादकशब्दाभावादिति यागस्य क्रियारूपत्वाङ्गीकारात् तत्र कारकाणामन्वयसम्भवात् इति।

( ३ ) तस्य-धात्वर्थस्य। यदाहुर्भट्टपादाः 'सम्बन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः। तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते' इति।

सम्बन्धसामान्येन, न च क्रियारूपायां भावनायां कारकातिरिक्तस्या-न्वयो नेति वाच्यम्, 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा' इत्यादौ क्रियाद्वयस्यापि पूर्वकालत्वादिसम्बन्धेनान्वयदर्शनात् ॥ यद्वा—अस्तु कारकाणां भावनान्वयः प्रधानान्वयसम्भवात्, धात्वर्थ-स्य(१) सम्बन्धित्वेनैवान्वयः, एवं च वस्तुतः कर्मकरणत्वोभयरूपत्वे-ऽपि शब्देन युगपत्प्रतीत्यभावान्न वैरूप्यम्, अतो धात्वर्थस्य करणत्वे-नान्वयाभावान्न मत्वर्थलक्षणापत्तिरिति गुणविधित्वमस्त्विति चेन्न—

( सिद्धान्तः )

पचतीत्यादितः पाकं करोति पाकेनोदनं करोतीत्याद्यनुभवेन धात्वर्थ-स्य सम्बन्धसामान्येन(२)भावनान्वयासम्भवात्प्रधानान्वयबाधकमाना-भावेन कारकाणां धात्वर्थान्वयासंभवाच्च, अतो यत्र प्रधानभूता भावना पचति यजतीत्यादौ यत्र वा पक्ता पाचक इत्यादावितराविशेषणभूता तत्रापि भावनायामेव कारकाणामन्वयः, धात्वर्थस्य विधिसमभिव्याहारे करणत्वेन तदभावे पुमर्थत्वावगतौ च कर्मत्वेन भावनान्वयः, तस्य फल-निरूपितमेव करणत्वं गुणनिरूपितमेव कर्मत्वम् योग्यत्वादिति अ-न्यतरान्वयः स्यात्, उभयरूपत्वं युगपद्बोधे विरुद्धम्, क्रमिकबो-धद्वये त्वावृत्तिरिति वाक्यभेदः, विरुद्धत्रिकद्वयं च । तथा हि—फलान्वयवेलायां यागस्य करणत्वविधेयत्वोपादेयत्वानि, गुणा-न्वयवेलायां कर्मत्वानुवाद्यत्वोद्देश्यत्वानि, अत्र कर्मत्वकरणत्वयोः स्पष्टो विरोधः, अज्ञातज्ञापनरूपविधेयत्वस्य ज्ञातज्ञापनरूपानुवाद्यत्वेन वि-रोधः, समवाय साध्यत्वेनाऽव्यापारितान्यतरसम्बन्धेन प्रकृतभावनान्व-यित्वे सति प्रकृतविधिप्रयोज्यत्वरूपस्योपादेयत्वस्य एतदन्यवि-षयत्वसम्बन्धेन भावनासम्बन्धित्वे सति प्रकृतविध्यप्रयोज्यत्वरूपस्यो-द्देश्यत्वस्य च स्पष्टो विरोधः । कृतिविषयाश्रयान्यतरत्वमुपादेयत्वं त-

---

मयूखः ।

( १ ) धात्वर्थस्येति । तथाच वाजपेयकरणिका यागसम्बन्धिनी भावनेति बोधः । कर्मत्वकरणत्वोभयरूपत्वेऽपीति । वाजपेयेन यागं भावयेत् । यागेन च स्वर्गं भावयेत् इत्य-र्थाद्यागस्योभयरूपत्वं पर्यवसाने यद्यपि लभ्यते तथापि शब्दो युगपन्न प्रतीयते इति गुणादि-निरूपितकर्मत्वस्य फलनिरूपितकरणत्वस्य च यागे सत्त्वेऽपि न वैरूप्यमिति भावः ।

( २ ) भावनान्वयासम्भवादिति । किन्तु धात्वर्थस्य कर्मत्वकरणत्वान्यतरकारकत्वेनै-वान्वयो भावनायामित्यर्थः । प्रधानान्वयेति 'न हि भिक्षुक' इति न्यायेन प्रधानभावनाया-मेव कारकाणामन्वयो न धात्वर्थ इति भावः ।

दन्यत्वमुद्देश्यत्वम् । अतः कर्तुरुपादेयत्वं तदेकत्वस्यानुपादेयत्वमित्याहुः॥

केचित्तु—कृतिसमवायाघटितसम्बन्धेन(१) प्रकृतभावनान्वयित्वे सति प्रकृतविध्यप्रयोज्यत्वमुद्देश्यत्वं तदन्यत्वमुपादेयत्वमिति विरोधमाहुः । इदं चोपपादितं पुरस्तात् ।

तेन श्रूयमाणस्य यजेर्युगपत्क्रमेण चोभयपरत्वायोगाच्छ्रूयमाणविधेरन्यतरपरत्वमभ्युपेत्यान्यतरस्यार्थिकत्वेऽभ्युपेयेऽपेक्षितयोग्यत्वाभ्यां करणत्वस्यैव शाब्दत्वमिति गुणान्वयार्थमावश्यकी मत्वर्थलक्षणेति तत्परिहारायोद्भिदादिपदानां नामत्वमङ्गीकर्तव्यम्, वाजपेयपदे त्वयं विशेषः—वाजपेयं सुरा द्रव्यमिति तत्पुरुषप्रतिपादितसुराद्रव्यविधावौषधद्रव्यत्वेन द्रव्यसामान्यबलीयस्त्वेनेष्टिकविध्यन्तप्राप्तेः, सप्तदशदीक्षो वाजपेय इति दीक्षानुवादानुपपत्तिः, एवं चानुवादानुपपत्तेर्मत्वर्थलक्षणाभयेन च बहुव्रीहिमाश्रित्य कर्मपरो वाजपेयशब्दः, यद्यपि सुराग्रहाणां साक्षान्न कर्मसम्बन्धः, तथापि सुराग्रहानुकम्पनाङ्कत्वरूपसम्बन्धसत्त्वात्तद्वाच्यत्वोपपत्तिरिति सिद्धं नामत्वम् ।

## ( ६ ) आग्नेयादीनामनामधेयताधिकरणम् ।

## तद्गुणाश्च विधीयेरन्न चेदन्येन शिष्टाः ॥८॥

### प्रभा

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्यादावाग्नेयपदं न कर्मधेयम् अपि तु **तद्गुणास्तु** स च गुणाश्च तद्गुणाः यागः अग्न्यादिरूपगुणाश्च तद्गुणाश्च इति पाठे तु **तत्** कर्म **गुणाः** अग्न्यादिरूपगुणाः इति सरलोऽर्थः । **विधीयेरन्** **विधानार्थं** विधेये तत्तद्गुणविशिष्टतत्तत्प्रधानरूपे **अविभागात्** विशिष्टस्यैकत्वेन विधेयभेदप्रयुक्तवाक्यभेदाप्रसक्तेः ते गुणाः **चेत्** **अन्येन** वाक्यान्तरेण **न शिष्टाः** न विहिताः विशिष्टघटकस्य विशेष्यस्य विशेषणस्य वा यत्रान्यतः प्राप्तिरस्ति तत्र न विशिष्टविधानं सम्भवति इति भावः ॥ ८ ॥

( पूर्वपक्षः )

नामत्वापवादः क्रियते, नन्वेवमाग्नेयोऽष्टाकपालो भवतीत्यत्राग्ने-

---

### मयूखः ।

( १ ) केचित्तु 'कृतिसमवायाघटितसम्बन्धेन प्रकृतभावनान्वयित्वे सति प्रकृतविधिप्रयुक्तविषयत्वमुद्देश्यत्वम् । तदभावश्चोपादेयत्वम् । स्वर्गादिरूपफले, प्रातरादिरूपे काले, सरस्वतीदक्षिणतीरादिरूपे देशे, राहूपरागादिरूपे निमित्ते च उद्देश्यत्वं तेषां यथोक्तकर्मतासम्बन्धेन भावनासम्बन्धिनां कृतिविषयत्वाभावेन प्रकृताविध्यप्रयुक्तत्वात्, इति कौस्तुभे परिष्कृतोऽयमर्थः ।

यशब्दो नामधेयम् । अत्राप्राप्तार्थकत्वाद्विधिभावनां(१) च प्रकल्प्य विनियोगभङ्गेनाष्टाकपालकरणकभावनायामग्नेरपि देवतात्वेन विधौ वाक्यभेदात् मानान्तरप्राप्तत्वाच्च, तत्प्रख्यनयेन नामधेयं क्रमविनियुक्ताग्निर्मूर्धेति मन्त्रेण(२) प्राप्तिरिति केचित्, न चात्र(३) ब्राह्मणमन्त्रपाठक्रमयोर्वैलक्षण्येन क्रमो नास्तीति वाच्यम्, 'शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः' इति वाक्यकल्प्यपूर्वानुष्ठानविधिनानुष्ठानसादेश्येन तत्प्राप्तिसम्भवात्, एतद्वाक्यशेषे अग्नये ध्रियस्वेति चतुर्थ्या तत्प्राप्तिरित्यन्ये ।

अत आग्नेयपदं पुरोडाशकरणकभावनाया नामधेयम्, विधेयभावनावच्छेदकीभूतानिर्धारितविशेषधात्वर्थसामान्यस्यैव, ज्योतिर्गौरायुरित्यादौ ज्योतिरादिपदवत् ।

नामधेयप्रयोजनं(४) चाग्नेयं चतुर्धा करोतीत्यादौ कर्मण आवृत्तिः, आग्नेयमाज्यमित्यादौ नामातिदेशः ।

---

मयूखः ।

( १ ) विधिभावनामिति । यद्यपि भवतिः सत्तावचन इति विधेर्भावनायास्तदवच्छेदयोग्यधात्वर्थस्य वा नोपादानं तथापि अप्राप्तार्थत्वाद्विधिं प्रकल्प्य तस्य भूधातोश्च भावनां विनानुपपन्नत्वात् भावना भवतिनाक्षिप्यते तत्र च सक्तूञ्जुहोतीतिवदष्टाकपालस्य करणत्वेनान्वयः, अनीप्सितत्वेन कर्मत्वेनान्वयायोगात्, प्रथमान्तस्य तत्रान्वयासम्भवाच्चेति भावः ।

( २ ) मन्त्रेण प्राप्तिरिति । 'अग्निर्मूर्धा' इति याज्यानुवाक्यायुगलस्य स्थानेन अष्टाकपालभावनाङ्गत्वावगतेरुपांशुयाजवद्देवतालक्षकत्वमिति अग्नेः प्राप्तिरित्यर्थः ।

( ३ ) अग्नीषोमीययागस्तैत्तरीयब्राह्मणे पञ्चमप्रपाठके द्वितीयानुवाके 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति पठितः आग्नेयस्तु षष्ठप्रपाठके तृतीयानुवाके 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इति पठितः मन्त्रपाठस्य तु वैपरीत्यमिति कथमग्निर्मूर्धेति मन्त्रस्थानेन यागाङ्गत्वनिर्णय इत्याशयेन शङ्कते न चेति । पूर्वानुष्ठानेति । स्वस्थानादपकृष्य पूर्वमाग्नेयस्यानुष्ठानमिति अनुष्ठानसादेश्यलक्षणस्थानक्रमात् आग्नेयाङ्गत्वनिर्णयः इति भावः ।

( ४ ) भवदेवमतेन नामत्वप्रयोजनमाह—आग्नेयं चतुर्धेति । ननु उत्पत्तिवाक्यगतस्याग्नेयपदस्य नामत्वेऽपि चतुर्धाकरणवाक्यगतस्य तस्य 'पुरोडाशं चतुर्धा करोति' इति वाक्यान्तरानुसारेण अग्निदेवतोपलक्षितपुरोडाशपरत्वात् तस्यैव विभागरूपचतुर्धाकरणविधिप्रतीतिः कर्मण आवृत्तिर्न प्रयोजनमित्यपरितोषादाह—आग्नेयमाज्यमिति । 'आग्नेयमाज्यम्' 'ऐन्द्रः पुरोडाशः' इत्यादौ द्रव्यसादृश्यबलेन उपांशुयाजाग्नेयविध्यन्ते प्रसक्ते नामातिदेशबलेन आग्नेयसान्नाय्यविध्यन्तप्राप्तिः प्रयोजनमिति भावः ।

एतेन(१) विशिष्टविध्युपादानार्थमिदमधिकरणं न नामत्वनिरासार्थम् । नामप्रयोजनाभावादिति परास्तम् , अत अग्नेयादिपदानां नामत्वमिति चेन्न—

( सिद्धान्तः )

भवत्यर्थकर्तुः करोति(२) कर्मत्वनियमेनाष्टाकपालस्य कर्मत्वात्तज्जनकव्यापारे मन्त्रप्रकाश्याग्नेर्देवतात्वेनान्वयायोगेन भावनावच्छेदकयागकल्पनानुपपत्तेः, याज्यानुवाक्येसमाख्यासहकृतलिङ्गेन स्थानबाधेन मन्त्रोत्कर्षापत्तेश्च, आघारे त्वितिकरणेन मन्त्रविनियोगाद्वैषम्यम् , अत आग्नेयपदं विधेयगुणसमर्पकम् , अत्राप्राप्तत्वेन तिपो लेट्त्वं परिकल्प्य लेट्त्वेनाभिधेयभावनायामष्टाकपालद्रव्यस्याग्नेर्देवतात्वेनान्वयात्सकलकारकाविशिष्टाक्षिप्तयत्किञ्चिद्धात्वर्थावच्छिन्नेष्टसामान्यभाव्यकभावनाविध्युत्तरं यागं विना हविः समभिव्याहृतदेवतात्वस्यानिर्वाहाद्यागरूपत्वेनास्यानुमितस्यापि यागस्य शाब्दत्वसिद्धये भूधातौ लक्षणाऽऽश्रीयते, अत एवैन्द्रवायवादिवाक्यैर्यागानुमानेऽपि सोमेन यजेतेति यागविधिरर्थवान् , एवं चात्रानेकगुणविशिष्टभावनाविधानमिति गुणविधिराग्नेयपदम् ।

## ( ७ ) बर्हिरादिशब्दानां जातिवाचिताधिकरणम् ।

### बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥९॥

प्रभा ।

असंस्कारे संस्काराभावेऽपि बर्हिराज्ययोः लौकिकयोरपि शब्दलाभात् 'बर्हिरादाय गावो गताः' 'आज्यं क्रय्यम्' इत्यादौ बर्हिरादौ शब्दप्रयोगदर्शनात् बर्हिरादिः अतच्छब्दः न संस्कारनिमित्तकः किन्तु जातिवाची ॥ ९ ॥

( संशयः )

प्रसङ्गाद्(३) बर्हिराज्यपुरोडाशशब्दानां संस्कारवाचित्वं जातिवाचित्वं वेति चिन्ता ।

---

मयूखः ।

( १ ) न्यायसुधाकृतस्तु प्राप्तेः प्रयोजनस्य चाभावेन नामत्वपूर्वपक्षो न युक्तः किन्तु विशिष्टविध्यसम्भवः पूर्वपक्षे, तदुपपादनं च सिद्धान्त इत्येवाधिकरणशरीरमित्याहुस्तद् दूषयति एतेनेति । विशिष्टविधिव्युत्पादनस्य प्रस्तुतनामधेयत्वविचारानुपयुक्तत्वेनासङ्गतत्वमपि दोष इति ध्येयम् ।

( २ ) कर्मत्वनियमेनेति । 'भवत्यर्थस्य यः कर्ता करोतेः कर्म जायते' इति हि न्यायशरीरम् ।

( ३ ) प्रसङ्गादिति । आद्येऽधिकरणे गुणविधित्वनामत्वान्यतरप्रकारेण सर्वेषामुपप-

( पूर्वपक्षः )

न चाज्यमुत्पुनाति बर्हिर्लुनाति पुरोडाशं प्रथयतीत्यादिविधिषु सिद्धेर्बर्हिषि संस्कारविधानं, संस्कारवाचित्वेऽन्योन्याश्रयापत्त्यानुपपन्नमिति(१) वाच्यम्। यूपाहवनीयादिवाक्य इव विपरीतवाक्यार्थाङ्गीकारेण(२)पूर्वकरणात् तत्र शास्त्रस्था चेति नयेनाभियुक्तयाज्ञिकप्रसिद्ध्या संस्कारवाचित्वे(३) प्राप्ते,

( सिद्धान्तः )

संस्कारविशिष्टे शक्तौ गौरवाद्विशेषणीभूततत्संस्कारमात्रे शक्तावतज्जातिमति तादृशसंस्कारविशिष्टे प्रयोगापत्तेः संस्काररहितजातिमात्रप्रयोगसत्त्वाच्च लाघवाज्जातिवाचित्वम्, जातिमात्रे प्रयोगस्य विरोधाभावेन याज्ञिकप्रयोगाबाध्यत्वात्, यूपादिपदानां तु संस्कारं विना न प्रयोग इति वैषम्यम्,

प्रयोजनं यूपावटास्तरणबर्हिषि बर्हिःषु नोपदेशेन(१६) धर्मप्राप्तिरिति।

## ( ८ ) प्रोक्षण्यादिशब्दानां यौगिकताधिकरणम्—

### प्रोक्षणीष्वर्थसंयोगात् ॥ १० ॥

प्रभा

**प्रोक्षणीषु** प्रोक्षणार्थास्वप्सु **अर्थसंयोगात्** प्रोक्षणीशब्दार्थस्य प्रकृष्टोक्षणसाधनत्वरूपस्य समवायात् प्रोक्षणीशब्दो यौगिक एव न जातिवाची नापि संस्कारवाची १०

---

मयूखः।

दानां प्रामाण्यं साधितं ततः व्युत्पादितप्रकारचतुष्टयेनैव सर्वत्र नामत्वमन्यथा तु गुणविधिरितिपूर्वाधिकरणेनोक्ते प्रसङ्गात् बर्हिराज्यपुरोडाशादिशब्दानां संस्कारविशिष्टजातिमद्रव्यविधायित्वम् उत तद्रहितकेवलजातिमद्रव्यविधायित्वमिति इहेदानीं विधेयो गुणविशेषो विचार्यत इत्यभिप्रायः।

( १ ) अन्योन्याश्रयेति। बर्हिर्लुनातीत्यादिवाक्यैर्बर्हिराद्युद्देशेन लवनसंस्कारो विधीयते लवनसंस्कृताश्च कुशा बर्हिष इति अन्योन्याश्रय इति भावः।

( २ ) विपरीतवाक्यार्थेति। यथा 'यूपं छिनत्ति' इत्यस्य यं छिनत्ति स यूप इति विपरीतवचनव्यक्त्या वाक्यार्थः क्रियते तथा यल्लुनाति तद्बर्हिरिति विपरीतवचनव्यक्त्यङ्गीकारेण अन्योन्याश्रयाभाव इति भावः।

( ३ ) धर्मप्राप्तिर्नेति। पूर्वपक्षे बर्हिरादिशब्दबलेन यूपावटास्तरणबर्हिषि लवन संस्कारः स्यात् सिद्धान्ते तु नेत्यर्थः।

( पूर्वपक्षः )

नन्वेवं(१) प्रोक्षणीशब्दस्योत्पवनादिसंस्कारवाचित्वासम्भवात्प्रोक्षणीभिरुद्वेजिताः स्मः इत्यसंस्कृतास्वप्सु प्रयोगादाबप्त्वजातिवाचित्वम् । एवं च घृतं प्रोक्षणमित्यत्र घृतमासादयेत्यूह इति चेन्न—

( सिद्धान्तः )

प्रकृष्टोक्षणसाधनत्वरूपक्लृप्तावयवयोगेन प्रवृत्त्युपपत्तावतिरिक्तरूढिकल्पनानुपपत्तेः न चैवमुदासीनास्वप्सु प्रयोगो न स्यात्, स्याच्च तैलादिष्विति वाच्यम्, फलोपहितसाधनत्वाभावेऽपि योग्यतासत्त्वेन ल्युटश्च साधनतामात्रवाचित्वेन तत्रापि प्रयोगात्, तिलस्य प्रकृतिभूतप्रोक्षणपदवाच्यत्वेऽपि प्रत्ययार्थस्त्रीत्वानन्वयेन तत्राप्रयोगोपपत्तेः । न च समुदायशक्त्यावयवशक्तिर्बाध्यते इति वाच्यम्, समुदायशक्तेरासिद्धत्वात, रथकारशब्दस्य तु सुधन्वजात्यपरपर्यायऋभुशब्दवाच्यजातिवाचित्वावगमात्सामान्यतः प्रवृत्तयोगबाधः, अतो यौगिकत्वम् ।

प्रयोजनं ( विकृतिविशेषे ) घृतं प्रोक्षण भवतीत्यत्र संस्कारवाचित्वे प्रोक्षणीरासादयेत्यविकृतः प्रयोगः जातिवाचित्वे घृतमासादयेति यौगिकत्वे प्रोक्षणमित्यूहः ।

अवयवार्थसंयोगाद्यौगिकत्वमित्यर्थः(२) ॥

## ( ९ ) निर्मन्थ्यशब्दस्य यौगिकताधिकरणम्—

### तथा निर्मन्थ्ये ॥ ११ ॥

प्रभा

निर्मन्थ्ये निर्मन्थनसाध्ये वह्नौ तथा मन्थनप्रयोज्यत्वरूपार्थसमवायात् यौगिक एव निर्मन्थ्यशब्दः स्वीकर्तव्यः ॥ ११ ॥

( पूर्वपक्षः )

'निर्मन्थ्येनेष्टकाः (३)पचन्ति' इत्यत्र निर्मन्थ्यशब्दोऽधिमन्थनशकलाधिकरणत्वादिसंस्कारवाची पूर्वनयेन याज्ञिकप्रयोगात्समुदायशक्त्या जातिवचनः, असंस्कृतेऽपि निर्मन्थ्यमानय पक्ष्यामह इति प्रयोगान्मथनकर्मत्वरूपयोगस्य मथननिष्पन्नेऽग्नावभावेन योगस्यापि व्यभिचारात् मथननिष्पन्नेन पाकासम्भवात्, अतो जातिवाचित्वमिति चेन्न—

( सिद्धान्तः )

कृत्यरूपण्यत्प्रत्ययस्य 'अर्हे कृत्यतृचश्च' इति अर्हार्थकतया मन्थनप्र

---

( १ ) अपवादसङ्गत्या प्रत्यवतिष्ठते नन्वेवमिति ।

( २ ) सूत्रस्येति शेषः । ( ३ ) अतिदेशसङ्गत्याह—निर्मन्थ्येनेति ।

योऽस्य वह्निसन्तानस्य मथनार्हत्वात्तदेव निमित्तत्वेनाश्रित्य क्लृप्तावयवशक्त्यैवोपपत्तावतिरिक्तशक्तिकल्पनायोगात्, अतो यौगिकः।

अत्र च पाकानुपपत्त्यैवाग्निप्राप्तौ पाकाङ्गत्वेन मथनविधिः। तत्प्रयोजनं (१)तस्यैकदेशकालकर्तृकत्वम्॥

## (१०) वैश्वदेवादिशब्दानां नामधेयताधिकरणम्।

**वैश्वदेवे विकल्प इति न प्रकरणात्प्रत्यक्षाविधानाच्च ॥१२॥ न हि प्रकरणं द्रव्यस्य मिथश्चानर्थसम्बन्धः ॥१३॥ परार्थत्वाद्गुणानाम् ॥ १४॥**

प्रभा

**वैश्वदेवे** 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तदशकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम्' इति विहितानामाष्टानां यागानां सन्निधावाम्नाते 'वैश्वदेवेन यजेत' इत्येतद्वाक्यघटकीभूते वैश्वदेवपदे अष्टसु यागेषु विश्वदेवदेवतारूपगुणविधिपरतया **विकल्प इति चेत् न** उत्पत्तिशिष्टगुणावरुद्धेषु **प्रकरणात्** देवतान्तरविधानासम्भवात् अमिक्षायागे विश्वदेवदेवतायाः **प्रत्यक्षविधानात्** प्राप्तत्वेन विध्यनुपपत्तेः **च हि** यस्मात् कारणात् **प्रकरणम्** उत्पन्नशिष्टप्रकरणानुगृहीतविश्वदेवगुणः **द्रव्यस्य** उत्पत्तिवाक्येषु श्रुतस्य अग्न्यादिदेवतारूपगुणस्य **न** बाधकम् उत्पत्तिशिष्टगुणस्य उत्पन्नशिष्टगुणापेक्षया प्राबल्यादिति भावः। अतो वैश्वदेवपदमष्टानां यागानां नामधेयमिति स्थितम्॥ १२॥

यदि वैश्वदेवशब्दः आग्नेयादियागेषु देवताविधिः स्यात् तदा आमिक्षायागे विश्वदेवदेवताकत्वस्य प्राप्ततया तत्रानुवादोऽन्यत्र विधिरिति एकस्यैव वैश्वदेवशब्दस्य विधित्वानुवादत्वयोः **अनर्थसम्बन्धः** अयुक्तयोरर्थयोःसम्बन्धः **च मिथः** स्यात्॥ १३॥

किं च गुणविधिपक्षे अष्टानामपि यागानां विश्वदेवदेवताकत्वे सति पुरोडाशचर्वादीनामष्टानामपि हविषामेकैवाहुतिः स्यात् **गुणानां** पुरोडाशादिद्रव्याणां यागं प्रति **परार्थत्वात्** गुणभूतानां स्वरूपेण प्रधानभूतयागानुष्ठानभेदप्रयोजकत्वानुपपत्तेः गुणावृत्त्या प्रधानावृत्तेरयोगात् देवताभेदस्तु तत्प्रयोजकः देवताप्रकाशकयाज्यादीनां युगपत्प्रयोगास-

---

मयूखः

(१) एकदेशकालकर्तृकत्वमिति। अयमत्र विवेकः अङ्गप्रधानयोः मन्थनपाकयोः एकदेशकालकर्तृकत्वावगमात् प्रयोगमध्यपातित्वलाभाच्च अधिमन्थनशकलनिधानादिधर्मरहितं केवलं मन्थनं कृत्वा तेनाग्निना पाकः कार्यः यौगिकत्वपक्षे जातिपक्षे प्रयोगबहिर्भूतेनाग्निना संस्कारपक्षे पशुप्रकरणविहिताधिमन्थनशकलनिधानादिरूपधर्मविशिष्टस्य मन्थनस्य प्रयोगान्तःपात इति।

म्भवात् तथा सति 'नव प्रयाजा इज्यन्ते' 'नवानूयाजाः' 'अष्टौ हवींषि' 'द्वावाघारौ' 'द्वावाज्यभागौ' 'त्रिंशदाहुतयः सम्पद्यन्ते' इत्याहुतीनां त्रिंशत्त्वसम्पत्तेर्नैत्यवदनुवादो विरुध्येतेति भावः ॥ १४ ॥

( संशयः )

**वैश्वदेवे(१) पर्वण्याग्नेयादीनष्टौ यागान् विधाय 'वैश्वदेवेन यजेत' इति समाम्नातम्, तद्देवताविधायकमुत नामधेयमिति चिन्ता ।**

( पूर्वपक्षः )

**तत्र वैश्वदेवमिति सर्वनामार्थकतद्धितस्य वाक्योपात्तद्रव्यविशेषपरत्वाभाववत्त्वे सति प्राकरणिक(२)द्रव्यपरत्वसंभवादुत्पन्नेषु(३) देवताविधानोपपत्तेर्गुणविधिः, न च ताद्धितस्य स्ववाक्योपात्तयागपरत्वेनोपपात्तिः 'सूक्तहविषोः' इति ताद्धितस्य नियतत्वात्(४)स चाष्टसु यागेष्वगत्या विकल्पः, अन्यथा यागनामधेययोरविधेयत्वेन समुदायानुवादप्रयोजनाभावाद्वैयर्थ्यापत्तेः, न चैतद्वाक्यविहितदेवताविशिष्टयागे वैश्वदेव्यामिक्षेति द्रव्यविशेषविधिरिति वाच्यम् आग्नेयादिवाक्यश्रुतानुषक्तनिर्वपतिप्रत्यये विशिष्टविधित्वगुणविधित्वाभ्यां वैरूप्यापत्तेः(५), न चामिक्षायागे(६) निर्वापानुवादानुपपत्तेर्नानुषङ्गसंबन्ध इति वाच्यम्, प्रत्ययान्तरकल्पनागौरवपरिहारायार्थप्राप्तपृथक्करणरूपनिर्वापानुवादोपपत्तेः(७),**

---

मयूखः ।

( १ ) वैश्वदेव इति । आग्नेयाधिकरणे तत्प्रख्यन्यायासम्भवेन गुणविधित्वे साधिते तत्प्रसङ्गेनान्यत्रापि गुणविधौ विधेयगुणविशेषे च विचारिते 'यत्प्रसङ्गेन यदागतं तत्समाप्तौ तदेव बुद्धिस्थं भवति' इति न्यायेन आग्नेयाधिकरणोक्तगुणविधित्वे बुद्धिस्थे सति अत्रापि तत्प्रख्यन्यायाक्षेपेण गुणविधित्वपूर्वपक्षकरणात् आपवादिकी सङ्गतिः ।

( २ ) प्राकरणिकद्रव्येति । आग्नेयादिवाक्यस्थाष्टाकपालादिद्रव्येत्यर्थः ।

( ३ ) उत्पन्नेषु—आग्नेयादिषु ।

( ४ ) नियतत्वादिति । 'सूक्तहविषोः' इति कात्यायनस्मरणेन सूक्ते हविषि च देवतातद्धितस्य नियमात् वैश्वदेवशब्दस्य यागपरत्वं न सम्भवति लक्षणया विश्वदेवदेवताकहविष्कयागपरत्वं तु गौरवपराहतमिति न वैश्वदेवशब्दस्य यागनामधेयत्वं युक्तिमदिति भावः।

( ५ ) आग्नेवाक्यस्थस्य निर्वपेदित्यस्य सर्वत्रानुषङ्गात् अन्येषु विशिष्टविधिः आमिक्षावाक्ये च गुणविधिरिति वैरूप्यं स्यादिति भावः ।

( ६ ) आमिक्षायागे इति । निर्वापस्यातिदेशेन प्राप्त्याभावादितिशेषः ।

( ७ ) अनुवादोपपत्तेरिति । आग्नेयादिवाक्येषु अर्थप्राप्तनिर्वापानुवादेन आमिक्षावाक्येऽपि तदनुषङ्ग इति बोध्यम् ।

अतो गुणविधिरिति पूर्वपक्षः ॥

( सिद्धान्तः )

सिद्धान्तस्तु—उत्पत्त्युत्पन्नशिष्टगुण(१)योर्विकल्पायोगेनात्र गुणविध्यसंभवान्नामत्वम्, न च द्रव्यवाचिसर्वनामसमानार्थकतद्धितानुपपत्त्या विकल्पाङ्गीकारः,'आग्नेयो ब्राह्मण' इत्यादिदर्शनेन 'तस्येदम्' इति संबन्धतद्धिताङ्गीकारेण यागविषयतयोपपत्तेः, सबन्धश्च विश्वदेवदेवताजन्ययागघटितसमुदायाश्रितत्वरूपः, तेन संबन्धेन यजत्यनूदितयागसमुदाये विश्वदेवदेवताप्राप्तेः, तत्पदवाच्यत्वेन नामत्वम् ।

यद्वा—विश्वपदस्य सर्वपर्यायत्वात्सर्वत्वस्याधिकारिकतया(२)देवपदस्य च देवतावाचितया प्राकृताग्न्यादिदेवताकत्वमेव प्रवृत्तिनिमित्तम् ।

यद्वा—'यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' इति वाक्यशेषोक्तविश्वदेवकर्तृकत्वं प्रवृत्तिनिमित्तम्, तेन सिद्धमुत्पत्तिशिष्टगुणावरोधसहकृततत्प्रख्यनयेन (अष्टानामपि यागानां वैश्वदेवशब्दस्य) नामत्वम् ।

( प्रयोजनम् )

तत्प्रयोजनं 'प्राचीनप्रवणे वसन्ते वैश्वदेवेन यजेत' इत्यादिनाग्नेयादियागाष्टकस्य देशकालसंबन्धः, अन्यथामिक्षायागमात्रसम्बन्धापत्तिः, आग्नेयादिसमुदायप्राधान्यासिद्ध्यामिक्षायागविकारे आग्नेयाद्यनतिदेशश्च(३)। एवं च 'वाजिनो यजत्याहुतीनां त्रिंशत्त्वाय' इत्यन्यार्थदर्शनोपपत्तिः अन्यथाष्टाकपालादिद्रव्याणां वैश्वदेवरूपैकदेवताकत्वेन सह प्रक्षेपाभावादनुपपन्नमिदं त्रिंशत्त्वम्, अतो नामत्वम् । न च वैश्वदेववाक्यविहितयागे आग्नेयादिवाक्यविहितविशिष्टनिर्वापाणां सोमयागे ग्रहाणामिवाङ्गत्वमिति वाच्यम् अव्यक्तत्वेन सोमधर्मकत्वापत्त्या 'नव प्रयाजा' इतिप्रयाजानुवादकयानुपपत्तेः ।

---

मयूखः ।

( १ ) उत्पत्तिशिष्टो गुणोऽग्न्यादिः, उत्पन्नशिष्टो गुणो विश्वे देवाः ।

( २ ) आधिकारिकमिति । यथा सर्वमोदनं भुङ्क्त इत्यत्र सर्वत्वमाधिकारिकमधिकारप्राप्तविषयकं प्रकृतविषयकमिति यावत् एवं प्रकृते सर्वत्वं प्रकृताग्न्यादिदेवताविषयकमिति भावः ।

( ३ ) अनतिदेशश्चेति । वैश्वदेवेन यजेतेति वाक्याभावे प्राचीनप्रवण इतिवाक्ये वैश्वदेवशब्देनामिक्षायागस्यैव ग्रहणे तस्यैव कालसम्बन्धापत्त्या फलसम्बन्धः स्यादित्याग्नेयादीनां तदङ्गत्वं स्यादिति भावः ।

सूत्रं तु प्रकरणेन देवतान्तरविधानासंभवात्पक्षविहितदेवताकत्वा-च्च न गुणविधिरिति व्याख्येयम् ।

### (११) वैश्वानराधिकरणम् ।

**पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥१५॥ गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्तास्ति ॥१६॥ तच्छेषो नोपपद्यते इति चेदविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥१७॥ कारणं स्यादिति चेदानर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थे विधीयते ॥ १८ ॥**

प्रभा

ये 'वैश्वदेवेन यजेत' इत्यादौ वैश्वदेवपदाद्युपात्ता विश्वदेवादयः **पूर्ववन्तः** प्रमाणान्तरेण सम्भवत्प्राप्तिकास्ते **अविधानार्था** अविधेया भवन्तु "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, इत्यादौ **समाम्नाये तु तत्सामर्थ्यम्** अष्टाकपालत्वादीनां विधानसामर्थ्यमस्त्येवेति अष्टाकपालादिशब्दाः गुणविधय एव ॥ १५ ॥

सिद्धान्तमाह—**गुणस्येति । गुणस्य विधानार्थे** अष्टाकपालादिपदस्य गुणविधायकत्वस्वीक्रियमाणे **अतद्गुणाः** तस्मिन् 'वैश्वानरं द्वादशकपालं निर्वपेत्' इति वाक्यविहितयागे उत्पत्तिशिष्टगुणावरुद्धतया गुणत्वेनान्वेतुमनर्हाः अष्टाकपालादिपदार्थाः प्रयोगे अनुष्ठाने **अनर्थकाः स्युः** यागान्तरविधिस्वीकारे च **न हि तं प्रति अर्थवत्ता** तात्पर्यम् **अस्ति** यस्मिन् जाते एतामित्युपसंहारेण एकवाक्यतावगमात् । तस्मादष्टाकपालादिवाक्यमर्थवादत्वेन विधिशेष इति भावः ॥ १६ ॥

आशङ्कते—अष्टाकपालादि वाक्यं **तच्छेषः** विधिशेषः अर्थवादतया **नोपपद्यते** द्वादशकपालकर्मणोऽष्टकपालादिपदेनाभिधानासम्भवेन तत्स्तुतिपरतायाः असम्भवात् **इति चेत्** समाधत्ते—**विधानार्थे** विधेये द्वादशकपाले अष्टाकपालादीनाम् **अविभागात्** अन्तःपातित्वात् अवयुत्यानुवादकतया अष्टाकपालादिशब्दाः द्वादशकपालाभिधायकाः सन्तः **स्तुत्यर्थेन उपपद्येरन्** ॥ १७ ॥

प्रकारान्तरेणाशङ्कते—यत् अष्टाकपाल इत्यादेः गुणफलसम्बन्धविधित्वसम्भवेन वैश्वानरयागाश्रितमष्टाकपालादिकं ब्रह्मवर्चसादिफलं **कारणं स्यात् इति चेत्** समाधत्ते न अष्टाकपालादिः **अकारणं** पुत्रगतब्रह्मवर्चसादिफलकारणत्वेन विधानानर्हः **आनर्थक्यात् यतः कर्तुः गुणार्थे** अनुष्ठातृसमवेतफलजननाय **कारणानि** गोदोहनादीनि **विधीयन्ते गुणानां** कर्तृसमवेतफलजनकत्वस्यैवान्यत्र दर्शनेनेह तथात्वाभावान्न गुणफलसम्बन्धविधित्वमष्टाकपालवाक्यस्येति भावः ॥ १८ ॥

( संशयः )

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति निमित्ते यागं विधाय 'यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालो भवति त्रिवृतैवास्मिंस्तेजो दधाति यद्दशकपालो भवति विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन्पशून् दधाति यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति(१) श्रुतेऽष्टाकपालादिशब्दाः किं प्रकृतयागस्य नामधेयमुत तत्र गुणविधयः, किं वा फलार्थेन तदाश्रितगुणविधय उत द्वादशकपालस्तुत्यर्था इति चिन्ता।

( पूर्वपक्षः )

तत्र द्वादशत्वेऽष्टत्वादीनामन्तर्गतत्वेन कपालादिवत्प्राप्तेः तत्प्रख्यनयेन(२) वैश्वानरयागनाम अग्निहोत्रादिपदवच्च लक्षणया (३)सामानाधिकरण्यम्। अत एव(४) 'शतं ब्राह्मणाः सोमान् भक्षयन्ति दश दश एकैकं चमसमनुप्रसर्पन्ति' इति विभागदर्शनान्महासंख्यायामवान्तरसंख्याङ्गीकार उपपद्यते अतः कर्मनाम प्रयोजनं च तत्तन्नामकसंकल्पे तत्तन्नामावच्छिन्नेन यागेन पूतत्वादि भवतीति केचित्। न च नाम्ना(५)कर्मभेदापत्तिः पाचकलावकादिवद्यौगिकनाम्नामभेदेप्युपपत्तेः। अतो नामधेयमित्येकः पक्षः।

द्वादशत्वे परिच्छेदकत्वेनाष्टत्वस्याप्राप्तेर्नामत्वासंभवादष्टत्वस्य कपालोद्देशेनाष्टाकपालस्य वा यागोद्देशेन विधिः, न चोत्पत्तिशिष्टत्वेन द्वादशकपालप्राबल्यम्, जातोपक्रमतदुपसंहाराभ्यामेकवाक्यतया

---

मयूखः।

( १ ) भवतीति। अपवादसङ्गतिरत्र नामत्वापवादात् पूर्वाधिकरणोक्तोत्पत्तिशिष्टबलीयस्त्वादिन्यायाभावेन द्वितीयतृतीयपूर्वपक्षोत्थानात् प्रत्युदाहरणसङ्गतिश्च।

( २ ) तत्प्रख्यनयेनेति। अष्टाकपालादिपदैः अष्टत्वसंख्या कपालानि तदधिकरणकः संस्कारः द्रव्यमित्येतावदेव शक्त्योच्यते न तु यागः तेषां सर्वेषां द्वादशकपालपदेनैव प्राप्तिरिति तत्प्रख्यन्यायस्य प्रकृते प्राप्तिरित्यर्थः।

( ३ ) लक्षणया—अष्टाकपालादिपदानामष्टाकपालादिघटितलक्षणया।

( ४ ) ननु अन्येषां प्राप्तत्वेऽपि अष्टत्वादेर्न प्राप्तिरिति तद्विधिरयं स्यादित्यत आह—अत एवेति। तथा च द्वादशत्वेऽन्तर्गतत्वेनाष्टत्वस्यापि प्राप्तिरिति भावः।

( ५ ) नाम्ना—संज्ञया। अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः अनेन सहस्रदक्षिणेन यजेत' इत्यत्रेवेति भावः।

सर्वेषां तथात्वात्, वाक्यभेदेऽपि यद् द्वादशकपालो भवतीत्यनेन द्वादशकपालविधानेन सर्वेषामुत्पन्नशिष्टत्वाद्वा, अतोऽष्टाकपालादिवाक्येष्वष्टत्वादेरष्टाकपालादेर्वा वैश्वानरवाक्यप्राप्ताष्टाकपालकर्मिकायां यागकर्मिकायां वा भवत्यनूदितायां भावनायां विधिरित्यपरः ।

गुणफलसम्बन्धविधय एते तत्र कपालस्यावान्तरप्रकरणेनानुपस्थितेर्यागपुरोडाशयोश्चायोग्यतयाश्रयत्वायोगादष्टत्वादीनां फलोद्देशेन विध्यसम्भवेऽप्यष्टाकपालादिद्रव्याणां प्रकृतवैश्वानरयागाश्रितानां फले विधिः, अप्राप्तत्वेन कल्पितविधिविहितस्याष्टाकपालादिद्रव्यस्य स्तावकतया यस्मिन्नित्यादिभागे उपस्थितपूतत्वादेः रात्रिसत्रनयेन(१) फलत्वं कल्प्यते, एवं चोत्पत्तिशिष्टद्वादशकपालबाधकत्वमष्टाकपालादीनां युज्यते, न चैवमनेकेषां पूतत्वादीनां फलानामुद्देश्यत्वाद्वाक्यभेदः, फलपदानां कल्प्यत्वे ऽपि श्रूयमाणविधेरेव प्रत्युद्देश्यं सम्बन्धात्तथा च एकोपक्रमोपसंहारावगतैकवाक्यत्वबाधः, निमित्तफलयोरुद्देश्यत्वेन तदङ्गीकारवदिष्टापत्तेः । न च तत्रोद्देश्यवैजात्येन तत्परिहारः, तत्कल्प्यपापक्षयस्योद्देश्यतया विजातीयत्वाभावात्, अतो गुणफलसम्बन्ध इति तृतीयः ।

( सिद्धान्तः )

सिद्धान्तस्तु—उत्पत्तिश्रुतद्वितीयान्तकपालशब्दप्रतिपादितकपालोद्देशेनाष्टत्वादेर्न विधिः सम्भवति, उत्पत्तिवाक्ये पदश्रुत्यवगतद्वादशत्वावरोधे तद्बाधकत्वायोगात्, न च यत् द्वादशकपालो भवतीति द्वादशकपालविधानादुक्तहेत्वभावेनाष्टत्वादिविधिसम्भवः, औत्पत्तिकद्वादशपदस्यावयुत्यानुवादत्वापत्तेः, इष्टापत्तौ सापेक्षत्वात्समासानुपपत्तिः । अष्टाकपालादिपदेष्वेकप्रसरताभङ्गापत्तिः(२), अत एवातिदेशिककपालोद्देशेन न विधिः, प्रकृतयागानुवादेनाष्टाकपालादिद्रव्यविधिस्तूत्पत्तिशिष्टद्वादशकपालावरोधादयुक्तः । प्रथमान्तद्वादशकपालपदेन तद्विधौ तूत्पत्तिवाक्यनिष्ठतत्पदानर्थक्यं, प्रथमायां तृतीयार्थलक्षणा, अनेकद्रव्यविधानाद्वाक्यभेदश्च, अत एव न गुणफलविधिः, न चाख्यातभे-

---

मयूखः ।

( १ ) रात्रिसत्रनयेनेति । यथा रात्रिसत्रे 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यार्थवादिकं प्रतिष्ठारूपं फलं स्वीक्रियते तथेह वैश्वानरयागेऽपि आर्थवादिकं पूतत्वादिकं फलं स्यादिति भावः ।

( २ ) एकप्रसरताभङ्गेति । एकपदेनोपस्थापितयोरर्थयोरुद्देश्यविधेयभावेनान्वयो न भवतीति नियम एकप्रसरता तस्या भङ्गः कपालोद्देशेनाष्टत्वविधौ स्यादित्यर्थः ।

द्वात्तस्या(१)दोषत्वम् । 'यस्य हिरण्यं नश्येदाग्नेयं निर्वपेत्' इत्यादौ तदेकदेश्येकवाक्यत्वदर्शनात्(२)। अतो निर्वपत्याख्यातेनाश्रयप्राप्तौ भवत्याख्यातैस्तत्तद्गुणानां तत्तत्फलविधावैकार्थ्याभावेन दुरुद्धरो वाक्यभेदः । न च सिद्धान्तेऽपि निमित्तफलयोरुद्देश्यत्वेन सजातीयोद्देश्ययोरेकभावनान्वयस्य विलक्षणाकाङ्क्षानिबन्धनतया वाक्यभेदो दुष्परिहर इति वाच्यम् निमित्तस्यावश्यकत्वरूपोद्देश्यत्वेऽपि ईप्सितत्वरूपोद्देश्यत्वाभावात्फलस्यैव च तद्रूपत्वात् विजातीयोद्देश्ययोश्चैकेनान्वयेऽपि इतरविषयका काङ्क्षोपशमाभावादुभयोन्वयोपपत्तेर्वाक्यभेदाभावात् निमित्तबलेनोपस्थितनिषिद्धाचरणजन्यप्रत्यवायपरिहारस्य न भाव्यत्वं पूतत्वादिभिस्तदाकाङ्क्षापूरणात् , अतो न तन्निबन्धनोऽपि(३) वाक्यभेदः, नापि पूतत्वादीनामनेकेषामुद्देश्यतया सः । अर्थवादोक्तफलत्वेनोद्देश्यत्वाङ्गीकारात् । अत एवोद्देश्यतावच्छेदकताया व्यासज्यवृत्तित्वाङ्गीकाराच्च योगसिध्यधिकरणन्यायः । एवं पूतत्वादिफलानां नानुष्ठापकत्वम्, किन्तु—जन्यत्वमात्रम् । निमित्तेन तदाकाङ्क्षोपशमात् । अत एव जननवत्पुत्रगतपूतत्वादिफलिकामिष्टिं कुर्यादिति बोधायनः मृते पुत्रे न जातेष्टिः संवलिताधिकारत्वात् । अतोवाक्यभेदापत्त्या स्तावका अष्टाकपालादिशब्दाः । तत्र चावयवश्रुत्यावयविस्तुतिः । तत्राष्टाकपालादिपदान्यष्टाकपालादौ मुख्यानि । द्वादशकपालावयवे गौणानि सन्ति । गौणगर्भलक्षणयावयविप्राशस्त्यपराणि ।

सूत्रं त्वष्टत्वादीनि पूतत्वादीनां नाकारणम् अवगम्यमानैकार्थत्वत्यागप्रसङ्गादिमानि कर्तुरुपदिश्यन्ते किन्तु गुणार्थेन स्तुत्यर्थेन पठ्यन्ते इति व्याख्येयम् ।

( तत्सिद्धिपेटिका )

**तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः ॥ १९ ॥**

---

मयूखः ।

( १ ) तस्य-वाक्यभेदस्य ।

( २ ) एवं च यथा यस्य हिरण्यमिति वाक्ये यच्छब्दोपबन्धोदकवाक्यत्वमेवं यस्मिञ्जाते इत्यत्रापि यच्छब्दोपबन्धादेकवाक्यत्वमिति युक्तं चैतत् स्तावकत्वपक्षे निर्वपत्यतिरिक्तानां सर्वेषामेकस्तुतिलक्षकत्वाङ्गीकारादिति भावः ।

( ३ ) अन्यथा प्रत्यवायपरिहारस्य पूतत्वादेश्च सजातीयतया वाक्यभेदः स्यादेवेति भावः ।

प्रभा

ननु 'यजमानः प्रस्तर' इत्यत्र गुणविधिरर्थवादो वेति संशये अष्टाकपालादिशब्दैर्यथाऽवयवद्वारा द्वादशकपालस्तुतिर्युज्यते तथा यजमानशब्दे प्रस्तरावयववाचकत्वस्य प्रस्तरशब्दे वा यजमानावयववाचकत्वस्याभावेन स्तावकत्वासम्भवात् असञ्जातविरोधित्वेन प्रथमश्रुते यजमानशब्दे लक्षणाऽसम्भवेऽपि चरमश्रुते प्रस्तरशब्दे प्रस्तरकार्यकारित्वे लक्षणामङ्गीकृत्य 'प्रस्तरे स्रुच आसादयति' इत्यादि प्रस्तरकार्यं स्रुग्धारणादिकं यजमानः कुर्यादिति गुणविधिरभ्युपेयः न तु निरर्थप्रायमर्थवादत्वमिति **पूर्वपक्षे** यजमानस्य प्रस्तरकार्यकारित्वे प्रस्तरविधेरानर्थक्यम् , किं च 'प्रस्तरमाहवनीये प्रहरति' इत्याहवनीये प्रस्तरप्रहरणाम्नानात् यजमानस्याहवनीये एव प्रहरणे तदुत्तरभाविसर्वकर्मलोपप्रसङ्ग इति अगत्या यजमानशब्दस्य प्रस्तरस्तावकतया अर्थवादत्वमेवेति **सिद्धान्तः**तत्र यजमानशब्दस्य यागकर्तृवाचकस्य कथं प्रस्तरे वृत्तिरत आह **तत्सिद्धीति** 'यजमानः प्रस्तर' इत्यत्र **तस्य** मुख्यार्थस्य **सिद्धिः** कार्यं साङ्गं प्रधानं तत्र प्रस्तरे यजमानकार्यकारित्वं, 'अग्निर्वै ब्राह्मण' इत्यत्र **तस्य** मुख्यार्थस्याग्नेः **जातिः** जन्म 'प्रजापतिरकामयत प्रजायेति स च मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्रीच्छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनाम्' इति ब्राह्मणे मुखजातत्वं,'आदित्यो यूपः' इत्यत्र **तस्य** मुख्यार्थस्य आदित्यस्य **सारूप्यं** घृताक्ते यूपे तेजस्वित्वं, 'अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गोऽश्वाः, इत्यत्र **तस्य** मुख्यार्थस्य अपशुशब्दार्थस्य घटादेः **प्रशंसा** अजादौ गवाश्वगतप्राशस्त्याभावः, 'सृष्टीरुपदधाति' इत्यत्र तस्य मुख्यार्थस्य सृष्टिपदघटितमन्त्रस्य **भूमा** सृष्ट्यसृष्टिमन्त्रसमुदाये बाहुल्यम् , 'प्राणभृत उपदधाति' इत्यत्र **तस्य** मुख्यार्थस्य प्राणस्य **लिङ्गं** प्राणप्रतिपादनसामर्थ्यं तस्य **समवायः** सम्बन्धमात्रं, **गुणाश्रयः** गौणवृत्तिनिमित्तमित्यर्थः ॥ १९ ॥

## ( १२ ) तत्सिद्ध्यधिकरणम् ।

**अष्टाकपालादिशब्दा गौण्या द्वादशकपालस्तावका इत्युक्ते गौणवृत्तिनिमित्तानि कथ्यन्ते । यजमानः प्रस्तरः यजमानः एककपाल इत्यत्र सामानाधिकरण्येऽपि नैकमितरस्य नामधेयम् रूढत्वात्, नापि ये यजमाना इत्यादिवदन्त्यपदलक्षिततत्कार्ये पूर्वपदार्थविधिः । विध्यश्रवणात्प्रस्तरमुत्तरं बर्हिषः सादयतीति विध्यन्तरैकवाक्यत्वाच्च यजमानप्रहरणे सर्वकर्मलोपापत्त्या दर्शप्रतिबन्धापत्तेश्च । अतोऽयमर्थवादः । तत्र यजमानपदं गौण्या प्रस्तरस्तावकम् । स्वशक्यसमवेतगुणसजातीयगुणयोग निमित्तत्वं गौणत्वम् । न त्वारोपितार्थवृत्तित्वम् । आरोपकपुरुषाभावात् खपुष्पं भवत्सिद्धान्त इत्यत्र खपुष्पशब्दस्य खपुष्पे गौणत्वापत्तेश्च । खपुष्पशब्दार्थमङ्गीकृत्य तदारोपं विनापि सादृश्यविवक्षया सिंहश(ब्द)स्य**

पुरुषे लोकवेदयोः प्रयोगदर्शनात्। एतत्खपुष्पं भवतिसिद्धान्त इत्यत्रापि कल्पितखपुष्पशब्दार्थमङ्गीकृत्य तन्निष्ठमिथ्यात्वस्य सिद्धान्ते सत्त्वाद्गौण्युपपत्तिः। एवं सिंहो देवदत्त इत्यत्रापि पूर्वत्रारोपितवृत्तिगुणसजातीयगुणवत्त्वम्। इह विद्यमानवृत्तिगुणसजातीयगुणवत्त्वं प्रवृत्तिनिमित्तमित्येतावान् विशेषः। न चैवं लक्षणैवास्तु न गौणीति वाच्यम्। क्रूरत्वादीनां सम्बन्धत्वेन भाने इष्टत्वात्। क्रूरत्वादिप्रकारकबोधस्य गौणीं विना असम्भवात्। एवं च स्वशक्यसमवेतधर्मसजातीयधर्मप्रकारकबोध एव गौण्याः कार्यम्। शक्यानिष्ठगुणसमवायवत्ता च गौणीति ते गुणास्तत्सिद्ध्यादयः षट्। यजमानशब्दो यजमानकार्यकरणत्वेन गुणेन प्रस्तरे गौण इति एवमग्रेऽपि।

## ( १३ ) जात्यधिकरणम्।

एकप्रभवत्वमपि क्वचिद् गुणः। यथाग्निर्वै ब्राह्मण इत्यत्राग्निशब्दो ब्राह्मणेऽपि जनकब्रह्ममुखजन्यत्वेन गौणः। अग्निजननसमानजातीयजननमेव गुणः।

## ( १४ ) सारूप्याधिकरणम्।

सारूप्यात्—आदित्यो यूपः यजमानो यूप इत्यत्राप्यादित्ययजमानशब्दाभ्यां यूपस्तुतिः। प्रवृत्तिनिमित्तं तु सादृश्यत्वेन सादृश्यं तच्च चक्षुर्ग्राह्यस्तेजस्वित्वोर्ध्वत्वादि पूर्वत्र शक्यवृत्तिगुणस्य स्वजातीयगुणवत्तासंसर्गेण प्रकारतया निमित्तता सारूप्यं तु संसर्गः। इह तु सारूप्यस्यैव समवायादिना प्रकारस्य निमित्ततेति भेदः॥

## ( १५ ) प्रशंसाधिकरणम्।

अग्नौ पुरस्तात्प्रतीचीनमश्वस्योपदधाति पश्चात्प्राचीनमृषभस्येति पुरुषोपधीतं विधायअपशवो वान्ये गोऽश्वेभ्यः पशवो गोश्वाः इति गवाश्वभिन्नपशुनिन्दया गवां स्तुतिः। घटादिवाचकोऽपशुशब्दो गवाश्वाभिन्नछागादिषु न पशुत्वाभावप्रतिपादकः, बाधात्। अत एव न तत्कार्यकरणत्वाभावबोधकोऽपि किन्तु समासान्तर्गतपशुशब्दलक्षितप्राशस्त्याभावप्रतिपादकतयान्यपशुनिन्दाद्वारा स्तुतिः। अत एवान्यत्र गौणवृत्तेः प्राशस्त्यप्रतिपत्तिः फलम्। इह तु प्रवृत्तिनिमित्तं फलं चेति।

## ( १६ ) भमाधिकरणम्।

सृष्टीरुपदधातीति श्रुतः सृष्टिशब्दः अकाण्डपठितसृष्टिप्रकाशकासृष्टिप्रकाशकेषु बहुत्वेन गौणः सन् सृष्टिप्रकरणकोपधानेष्टकास्तावकः।

अत्रेष्टकानां चयनाङ्गत्वानुपपत्तिप्राप्तमुपधानं विधीयते(१) । तत्प्रयोजनं तु तस्येष्टकासंस्कारकत्वासिद्धिः प्रत्येकोपधानसिद्धिश्च(२) चयनसमान-कर्तृकत्वसिद्धिश्च(३)। सृष्टिपदं तु लिङ्गप्रकरणप्राप्तसृष्टयसृष्टिमन्त्रमात्रस्य गौण्यानुवाद इति भाष्यकारः ।

प्राणभृत उपदधातीत्याद्यनेकोपधानविधिवैयर्थ्यापत्त्या नोपधानमात्रविधिः, किन्तु उपधानानुवादेन मन्त्रमात्रविधिः (४)मन्त्रविशिष्टोपधानविधिर्वा । मन्त्रविधेरुपधाने मन्त्रनियमो(५) मध्यमचितिसम्बन्धश्च(६) फलम् । सृष्टिपदं सृष्टिपदवन्मन्त्रकरणकोपधानवदिष्टकापरम्(७)। यद्यपि (८)इदमृतव्या उपधातीत्यादौ मत्प्रत्ययमतुल्लोपयोः सन्नियोगविशिष्टयोर्विधायकतया प्रकृतोदाहरणे न प्रवर्तते(९) । तथापि सन्नियो-

मयूखः ।

( १ ) विधीयत इति । न तु उपधानानुवादेन सृष्टिपदार्थः । तथा सति "इष्टकाभिरग्निं चिनुते" इति विध्यवगतचयनसाधनतानिर्वाहाय अवान्तरव्यापारतयाक्षिप्तस्योपधानस्येष्टकासाध्यत्वावगमेन इष्टकासंस्कारत्वाप्रतीतिः स्यात् ।

( २ ) प्रत्येकेति । प्रतिप्रधानं गुणावृत्तिरितिन्यायेन प्रतीष्टकमुपधानावृत्तिसिद्धिरित्यर्थः ।

( ३ ) चयनेति । अनेन विधिना इष्टकासंस्कारद्वारा चयनाङ्गत्वबोधने अङ्गप्रधानयोरेककर्तृकत्वसिद्धिरित्यर्थः ।

( ४ ) इष्टकानामेव द्वितीययोद्देश्यत्वावगमेन उपधानस्यैव करणतया विधेयतावगमान्मन्त्रमात्रविधानं न युक्तमतः पक्षान्तरमाह—मन्त्रविशिष्टेति ।

( ५ ) मन्त्रनियम इति । मन्त्राणामिष्टकामन्त्रप्रकाशकतया ग्रहणादिष्वपि प्राप्तिः स्यान्न नियमेनोपधाने एवेति भावः ।

( ६ ) मध्यमचितीति । "यां वै काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात् तां मध्यमायां चितावुपदध्यात्" इति वचनेन प्रत्यक्षब्राह्मणवतीनामिष्टकानां मध्यमचितिसम्बन्धस्य विधानात् अन्यथा तत्तच्चित्यवान्तरप्रकरणपाठरहितानां मन्त्राणां चयनमहाप्रकरणेन सर्वचितिषु अन्तिमायामेव वा निवेशापत्तेरिति भावः ।

( ७ ) इष्टकापदमिति । तत्र च विशेषणांशस्य मन्त्रस्य विधेयत्वात्तदिष्टकानां प्रत्यक्षब्राह्मणावत्त्वसिद्धिः । "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" इति सूत्रेण सृष्टिलिङ्गकमन्त्रोपधेयास्विष्टकासु गम्यमानासु मतुपो लोपविधानेन सृष्टिशब्दस्य सृष्टिपदवन्मन्त्रोपधेयेष्टकापरत्वमिति भावः ।

( ८ ) इदं—तद्वानासामिति सूत्रम् ।

( ९ ) न प्रवर्तत इति । तथा सति ऋतव्या इतिवत् सृष्ट्या इति स्यादिति भावः ।

गशिष्टसहप्रवृत्तिपरिभाषाया अनित्यत्वमूह्यते । तत्र च विशेषणीभूत मन्त्रविधिः । तत्रैव (१)सृष्टिपदमगत्या सृष्ट्यसृष्टिसमुदायिषु गौणमि· तिवार्त्तिककारः ।

( १७ ) लिङ्गसमवायाधिकरणम् ।

एवं प्राणभृत उपदधातीत्यत्र प्राणभृच्छब्दः प्राणभृदप्राणभृच्छब्दव· त्सु मन्त्रेषु गौणः। अत्र चाल्पत्वं (२)निमित्तम्। मलयवनं चन्दनमितिवत्।

इति तत्सिद्धिपेटिका ।

(१३) अक्ताधिकरणम्—

सन्दिग्धेषु वाक्यशेषात् ॥ २० ॥

प्रभा

सन्दिग्धेषु 'अक्ताः शर्करा उपदधाति' इत्यादिविध्यर्थेषु सन्देहविषयेषु वाक्यशे· षात् 'तेजो वै घृतम्' इति सन्निहितादर्थवादरूपात् कल्पना निर्णय इत्यर्थः उत्तरसूत्रा· त्कल्पनेत्यस्यानुषङ्गः ॥ २० ॥

( पूर्वपक्षः )

सावित्रचयने(३) अक्ताः शर्करा (४)उपदधातीति तेजो वै घृतमिति स्तावकार्थवादसहिताञ्जनविधिः श्रूयते । अत्राञ्जनविध्याक्षिप्ताञ्जनयोग्य· घृततैलवसादिद्रव्यसामान्यस्य वैधतया तद्विरुद्धार्थवादेन घृतनियमस्य कर्तुमशक्यतया घृतपदलक्षणया सवद्रव्यस्य स्तावकोऽर्थवाद उपसं· हारदुपक्रमस्य प्राबल्याच्च(५) । न(६) चापच्छेदधिकरणनयेनोत्तरप्राब·

मयूखः ।

(१) छन्दसि दृष्टानुविधिरिति मतुब्विधेरनित्यतया मतुबन्तप्रातिपदिकत्वाभावा· देव यत्प्रत्ययमतुब्लोपयोरप्रवृत्त्या लक्षणया सृष्टिपदमेव तदर्थमिति मतान्तरमाह—तत्रेति ।

( २ ) अल्पत्वमिति । भूम्नः पूर्वं निमित्तत्वस्योक्ततया गोबलीवर्दन्यायेन तदतिरिक्तस्याल्पत्वस्य निमित्तत्वे तात्पर्यं लिङ्गसमवायपदस्येत्यर्थः ।

( ३ ) इदानीं स्तावकत्वेन प्रमाणस्य 'तेजो वै घृतम्' इत्यर्थवादस्थस्य घृतादि· पदस्य 'अक्ताः शर्कराः उपदधाति'इति विध्यपेक्षिताञ्जनसाधनीभूतद्रवद्रव्यादिनिर्णये प्रा· माण्यमस्ति न वेति विचार्यते—सावित्रचयन इत्यादिना । घृतपदे च लिङ्गसम· वायेन घृताघृतरूपस्नेहद्रव्यमात्रवृत्तित्वापवादादपवादसङ्गतिरत्रेति बोध्यम् ।

( ४ ) शर्कराः—मृत्तिकामिश्राः क्षुद्रपाषाणाः ।

( ५ ) प्राबल्याच्चेति । ननु कांस्यभोजिन्यायेन अङ्गभूतार्थवादानुरोधित्वमेव· विधेरस्त्विति चेन्न यत्र गुणविधिना प्रधानस्य न किञ्चिद्बाध्यते तत्रैव कांस्यभोजिन्याय· प्रवृत्तेः प्रकृते तु प्रधानस्य संकोचरूपबाधापत्तेर्न तत्प्रवृत्तिरिति मन्तव्यम् ।

( ६ ) अपच्छेदाधिकरणेति । तत्र हि ज्योतिष्टोमे श्रूयते 'यद्युद्गातापच्छि·

त्यम् । तस्य न्यायस्य भिन्नवाक्यविषयत्वात् । विध्यर्थवादयोरेकवाक्यत्वस्य सिद्धत्वात् । न चैकवाक्यत्वं वाक्यैकवाक्यत्वाभिप्रायेणेति वाच्यम् । स्वार्थबोधे (१)समाप्त्यभावेन वाक्यैकवाक्यत्वासम्भवात् । मुख्ये विशेष्ये इतरसंसर्गतात्पर्यकत्वमेव वाक्यस्य समाप्तिः । मुख्यविशेष्यश्च नैयायिकानां मते प्रथमान्तपदोपस्थाप्यः । अस्मन्मते च यच्छुब्दाद्यसमभिव्याहृततिङभिधेया क्रिया अतो नापच्छेदनय इत्युपक्रमनयेनैव निर्णय इति चेत् ।

( सिद्धान्तः )

न निर्विशेषसामान्येन व्यवहारायोगेन द्रव्यविशेषोपस्थापकार्थवादस्य विध्यपेक्षितसमर्पकतया विरोधाभावात् । अतो घृतस्तुत्यन्यथानुपपत्तिकल्प्यो घृतविधिः । स चाञ्जनविधिरेव घृतेनेत्यध्याहृतपदसहितो भिन्नो वा । एवमपेक्षितफलादिसमर्पकत्वमपि । एवमुद्देश्यविशेषनिर्णायकत्वम् । यथा द्वयोः प्रणयन्तीत्यत्रोद्देश्यविशेषनिर्णयो वाक्यशेषात् ।

इदं तु चिन्त्यम् । यागस्वर्गसाध्यसाधनभावबोधकविध्यपेक्षितद्वारविशेषसमर्पकतया देवताप्रसादोपस्थापकार्थवादानां 'तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इत्यादीनां प्रामाण्यापत्याऽपूर्वोच्छेदः

मयूखः ।

श्वेतादक्षिणो यज्ञः संस्थाप्यः अथान्य आहृत्यस्तत्र तद्द्यात यत्पूर्वस्मिन्दास्यन् स्यात् यदि प्रतिहर्तापच्छिद्येत सर्वस्वं दद्यात्' इति । अयमर्थः प्रातः सवने बहिष्पवमानेन स्तोष्यमाणा ऋत्विजः शालायां बहिः प्रसर्पन्ति तदानीम् 'एकस्य पृष्ठतोऽन्यः' इत्येवं पिपीलिकावत्पङ्क्त्याकारेण गन्तव्यम् तत्र पुरतो गन्तुः कच्छं गृहीत्वैव पृष्ठतोऽन्यो गच्छेत् एवं सति यदि प्रमादादुद्गाता गृहीतं कच्छं मुञ्चेत् तदा दक्षिणामदत्त्वा प्रक्रान्तो यज्ञः समापनीयः तं समाप्य पुनरपि स यज्ञः प्रयोक्तव्यः तस्मिन् प्रयोगे पूर्वं यद्दित्सितं द्रव्यं तद्द्यात् यदा प्रतिहर्ता मुञ्चेत् तदा तस्मिन्नेव प्रयोगे सर्वस्वं दद्यात् इति तत्र उद्गातृप्रतिहर्तृकृतयोरपच्छेदयोर्यौगपद्ये समानबलत्वात् विकल्पेपि क्रमेणापच्छेदे असंजातविरोधिन्यायेन पूर्वस्य प्राबल्यमाशङ्क्य निरपेक्षोत्तरज्ञानेन पूर्वज्ञानस्य बाधात् उत्तरस्य प्राबल्यमुक्तम्–यदाहुर्माधवाचार्याः 'अपच्छेदक्रमे पूर्वः प्रबलः स्यादुतोत्तरः । असंजातविरोधेन पूर्वेणोत्तरबाधनम् ॥ निरपेक्षोत्तरज्ञानं जायते पूर्वबाधया । न बाधकान्तरं तस्य तेन प्रबलमुत्तरम् ॥ इति ।

( १ ) स्वार्थबोध इति । यदाहुः–स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते इति ।

स्यादिति(१) ॥

## (१४) अर्थसामर्थ्याधिकरणम्—

## अर्थाद्वा कल्पनैकदेशत्वात् ॥ २१ ॥

प्रभा

अर्थात् सामर्थ्यात् वा एव 'हस्तेनावद्यति' 'स्रुवेणावद्यति' इत्यादौ कल्पना अवदेयद्रव्यनिर्णयः अर्थाद्यस्य यदवदानसामर्थ्यं तेन तदवदेयम्। कुत एतदिति चेत् तत्राह—एकदेशत्वात्—शक्तेरपि सहकारित्वेन तदेकदेशत्वादित्यर्थः। यद्वा न च तन्निर्णीतस्यावैदिकत्वमत आह—एकदेशत्वात् तत्कल्पितपदस्य वेदैकदेशत्वात् वैदिकत्वमित्यर्थः ॥ २१ ॥

इति सूर्यनारायणशुक्लकृतायां जैमिनिसूत्रवृत्तौ प्रभायां प्रथमाध्याये चतुर्थः पादः।

(२)अर्थवादवदेव विधेयनिष्ठसामर्थ्यपरतयापि(३) सन्दिग्धोद्देश्यार्थनिर्णयः।यथा स्रुवेणावद्यति स्वधितिनावद्यति हस्तेनावद्यत्यञ्जलिना जुहोति सक्तून् जुहोतीत्यादौ स्रुवादिनिष्ठसामर्थ्येन घृतमांसपुरोडाशावदानानामुद्देश्यत्वम्। न च प्रमाणान्तरावगम्यवस्तुसामर्थ्यापेक्षत्वे वेदस्याप्रमाण्यापत्तिरिति वाच्यम्। शक्तिग्रहादिवत्तदपेक्षत्वे बाधकाभावात्। शब्दसामर्थ्यस्यार्थसामर्थ्यानुरोधवृत्तित्वात्। अत्र च तत्तद्वाक्यमध्याहृतद्रवादिवाचकपदकं विधायकं कल्पितवाक्यान्तरं वेति।

अर्थात्सामर्थ्यात्कल्पना निर्णय एकदेशत्वात्तत्कल्पितपदस्य वैदिकत्वादिति सूत्रार्थः।

विश्वामित्रकुलध्वजः समभवद्यो भट्टनारायण-
स्तद्वंशस्य करीरतां भजति यो विश्वेश्वराख्यः कृती।
गागाभट्ट इति प्रथां दिनकरात्प्राप्तः पितुर्लालना-
त्तस्य ग्रन्थ इहाभवत्प्रथमकः श्रीभाट्टचिन्तामणौ ॥

इति गागाभट्टकृतभाट्टचिन्तामणौ प्रथमाध्यायस्य चतुर्थः पादः।

## समाप्तश्च प्रथमोऽध्यायः।

---

मयूखः।

(१) अपूर्वोच्छेद इति। उपस्थितस्य देवताप्रसादस्य रात्रिसत्रन्यायेन द्वारत्वसंभवेनानुपस्थितस्यापूर्वस्य न तत्कल्पनीयमिति भावः।

(२) पूर्वाधिकरणोक्तनिर्णयकारणस्य वाक्यशेषस्याभावेन पूर्वपक्षोत्थानात् प्रत्युदाहरणसङ्गत्योपतिष्ठते-अर्थवादवदेवेति।

(३) सन्दिग्धेति। सन्दिग्धविषयतयोपस्थितत्वात्प्रसङ्गसङ्गतिरित्यर्थः।

इति सूर्यनारायणशुक्लविरचिते भाट्टचिन्तामणिमयूखे प्रथमाध्याये चतुर्थः पादः समाप्तः।

# अथ भाट्टचिन्तामणौ द्वितीयाध्यायस्य प्रथमः पादः।

## अथ प्रथमं प्रातिपदाधिकरणम्--

**भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत एष ह्यर्थो विधीयते ॥ १ ॥**

प्रभा

ये **भावार्थाः** भावः भावना अर्थोऽवच्छेद्योऽर्थो येषां ते भावनाविशेषणीभूतार्थाः **कर्मशब्दाः** कर्मशब्दः क्रियावाचको धातुः अस्ति वाचकत्वेन येषां ते धात्वर्थाः **तेभ्यः** धात्वर्थेभ्यः **एव क्रिया** अपूर्वोत्पत्तिरूपा फलोत्पत्तिरूपा वा **प्रतीयते** कुतः **एष हि अर्थः** धात्वर्थः **विधीयते** विधेयफलभावनावच्छेदकत्वेन सम्बध्यते न तु द्रव्यगुणरूपो नामार्थः। **यद्वा** ये **भावार्थाः** प्रत्ययेन भावनाप्रतिपादकाः **कर्मशब्दाः** प्रकृत्या कर्मवाचकाः 'यजेत' इत्यादयः **तेभ्यः क्रिया** कार्यमपूर्वं **प्रतीयेत** कल्प्येत न द्रव्यगुणशब्देभ्यः **हि** यस्मात्कारणात् **एषः अर्थः** धात्वर्थः **विधीयते** फलभावनाकरणत्वेन विधीयते ॥ तथा च **सोमेन 'यजेत'** इत्यादौ फलभावनायां धात्वर्थस्यैव करणत्वमिति तस्यैव फलसाधनीभूतापूर्वेण सम्बन्धः न सोमादेरुपपदार्थस्य तस्य धात्वर्थोपपकारकत्वादिति भावः ॥ १ ॥

( उपोद्घातः )

**निरूपितेषु(१) धर्मप्रमाणेषु प्रमेयधर्मावगतौ तदनेकत्वरूपो भेदो निरवशेषधर्मस्वरूपज्ञानार्थं चिन्त्यते। तदुद्देश्यकोष्टिभावनाया एव धर्मतया तद्भेदोऽध्यायार्थः। स च यद्यपि शब्दान्तरादिप्रमाणकधात्वर्थभेदेन, तदभावे गुणफलाधिकारे साक्षाद्गुणेनैव, सर्वेभ्य इत्यादौ फलभेदेन भवति तथापि द्वितीयाध्यायप्रतिपाद्यकरणीभूतधात्वर्थभेदद्वारकभेदस्य धात्वर्थकरणत्वासिद्धावसम्भवाद्धात्वर्थस्य भावनायां**

---

मयूखः।

( १ ) यद्यपि अथातो धर्मजिज्ञासा इति सूत्रेण धर्मस्वरूपजिज्ञासैव प्रथमतः प्रतिज्ञाता, तद्विवरणपरे को धर्मः किं लक्षणकः इति भाष्येऽपि प्रमाणाजिज्ञासातः प्राक् स्वरूपजिज्ञासैव प्रतिज्ञातेति तत्स्वरूपनिरूपणमेवादौ कर्तुमुचितम् न प्रमाणनिरूपणम्, तथापि मेयसिद्धेः प्रमाणाधीनत्वात् चोदनासूत्रे प्रमाणान्तर्भावेणैव स्वरूपोक्तेः कर्तुं योग्यामपि स्वरूपचिन्तामुपेक्ष्य प्रमाणचिन्ता पूर्वाध्याये कार्त्स्न्येन कृता। यदर्थं च यदारब्धं तत्समाप्तौ तद्बुद्धिस्थं जायत इति न्यायेन प्रमाणचिन्तासमाप्तौ बुद्धिस्थस्य स्वरूपस्यावसरलाभात् तन्निरूपणं क्रियते इत्यभिप्रेत्यावसरसङ्गतिं शब्दान्तरादिभिर्विधेः कर्मोत्पत्तिपरत्वादुत्पन्नस्य पुनर्विधानानर्थक्यात् भेदसिद्धिरानर्थक्यनिरासाधीनप्रामाण्यसिद्धावेव शक्या वक्तुमिति हेतुहेतुमद्भावसङ्गतिं वा दर्शयितुमाह—**निरूपितेष्विति।**

करणत्वं(१) चिन्त्यते ।

( विषयः )

इह विधेयोपपदार्थकानि सोमेन यजेतेत्येवमादीनि वाक्यान्युदाहरणम् , व्रीहीन् प्रोक्षतीत्यादौ सन्देहासम्भवात् ।

( पूर्वपक्षः )

ननु प्रधानसम्बन्धलाभात्सर्वेषां भावनान्वयः उपश्लेषकारकश्रुत्योस्तुल्यत्वात्, अन्यथा फलान्वयिनो गुणान्वये वैरूप्यं मत्वर्थलक्षणा वा स्यात् , तत्र चैकवाक्योपात्तत्वात्साधनसमुच्चयो न समुच्चितानां साधनत्वम् , पृथक् तृतीयानिर्देशात् । यद्वा—एकार्थत्वाद्विकल्प इति चेत्;—

( सिद्धान्तः )

न, करणभेदेन भावनाभेदे फलभेदे वाऽनेकादृष्टकल्पनापत्तिः । करणानां समुच्चयेऽप्युत्पत्त्यपूर्वानेकत्वम् । न च द्रव्यक्रिययोः परस्परसापेक्षत्वेन क्रमिकाभावान्नोत्पत्त्यपूर्वभेद इति वाच्यम् । सह क्रियमाणदधिपयोयाग इव तृतीयावगतनिरपेक्षकरणत्वस्य फलनिरूपितत्वासम्भवेनोत्पत्त्यपूर्वनिरूपितत्वेन तद्भेदकत्वात् । अतः प्रधानसम्बन्धत्यागं मत्वर्थलक्षणां नामत्वं वाङ्गीकृत्यास्यैव भावनाकरणत्वं युक्तम् । तत्र यागस्य फलान्वये सोमस्य तज्जनकतया सोमस्यान्वये यागस्याश्रयत्वेन दृष्टविधयैवोपकारकत्वम् ॥

द्वितीयं भावार्थाधिकरणम्—

**सर्वेषां भावोऽर्थ इति चेत् ॥ २ ॥ येषामुत्पत्तौ स्वप्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात्स्वे प्रयोगे, येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य ॥ ३ ॥**

प्रभा

सर्वेषां द्रव्यगुणादीनां भावः भावना अर्थोऽवच्छेद्य इति चेत् ॥ २ ॥ न, यतः उत्पत्तौ सोमेन येजेतत्याद्युत्पत्तिवाक्ये येषां पदानां स्वप्रयोगे स्वोच्चारण-

---

मयूखः ।

( १ ) चिन्ता च स्वर्गादिफलं प्रति किं धात्वर्थस्य करणत्वमुत उपपदार्थस्य सोमादेरपीत्येवंरूपा ।

वेलायां **रूपोपलब्धिः** स्ववाच्योपलब्धियोग्यता स्ववाच्यानां सिद्धत्वमिति यावत् **तानि नामानि तस्मात्** तेषां सिद्धार्थबोधकत्वात् **तेभ्यः** नामार्थेभ्यः **आकाङ्क्षा** स्वसाधनाकाङ्क्षा **परा** दूरे नास्तीति यावत् कुत इत्यत आह **भूतत्वात्** तत्तन्नामार्थस्य **स्वे प्रयोगे** उत्पत्तिवाक्य एव सिद्धत्वेन प्रतीतेः अतः नामर्थस्य सोमादेः फलसम्बन्धे स्वीक्रियमाणे यागो न दृष्टविधया सोमसाधनं तस्य सिद्धत्वात् किन्तु अदृष्टद्वारैवेति यागादिकमदृष्टं सोमार्थं सोमाच्चैकमदृष्टं स्वर्गार्थमित्यदृष्टद्वयं स्यात् सोमस्य तु यागार्थत्वे सोमेन साध्यस्य यागस्य निष्पत्तिर्दृष्टमेव फलं यागाच्चैकमेव स्वर्गार्थमदृष्टं कल्प्यमिति भावः। **येषां पदानां उत्पत्तौ** उत्पत्तिवाक्योच्चारणवेलायां **स्वेऽर्थे** स्वप्रतिपाद्येऽर्थे यागादौ साध्यतया **प्रयोगः** इन्द्रियसम्प्रयोगो न विद्यते **तानि आख्यातानि तस्मात्** तेषां साध्यार्थबोधकत्वात् **तेभ्यः** तदर्थेभ्यः स्वसाधनाकाङ्क्षा **प्रतीयेत** अतः उपपदार्थः दृष्टद्वारैव धात्वर्थोपकारकः धात्वर्थश्च अदृष्टद्वारा फलार्थ इति लाघवात् धात्वर्थस्यैव फलसम्बन्धो नोपपदार्थस्येति भावः। ननु उपपदार्थस्य फलसम्बन्धेऽपि धात्वर्थस्य आश्रयतया दृष्टविधयैव उपपदार्थोपकारकत्वं सम्भवतीति नादृष्टद्वयकल्पनेति धात्वर्थादेव फलमित्यत्र विनिगमकाभाव इत्याशङ्कायामाह—**प्रयोगस्य** प्रयुज्यमानायाः भावनायाः धात्वर्थेनैवान्वयस्समानपदोपात्ततया पूर्वम् **आश्रितत्वात्** औत्तरकालिकः फलान्वयोऽपि धात्वर्थस्यैव तथा च समानपदश्रुतिरेवात्र नियामिकेति भावः॥ ३॥

(पूर्वपक्षः)

**यद्येवं तदा सिद्धत्वरूपयोग्यतया कारकश्रुतेश्च सोमस्यैवेति चेत्,**

(सिद्धान्तः)

**न, अनेकादृष्टकल्पनापत्तेः। यागस्य द्वारत्वरूपेऽप्याश्रयत्वे यागादृष्टकल्पनाया आवश्यकत्वात्। जन्यत्वमात्रत्वे तदनुष्ठानवैयर्थ्यात्। संस्कारकत्वरूपे दृष्टाभावेनादृष्टसंस्कारकत्वापत्तिः। तेनाश्रयत्वस्यासम्भवाद्धात्वर्थस्यैव फलजनकतया भावनाकरणत्वेनान्वयः(१)।**

**धात्वर्थातिरिक्तभावना च करणत्वेनाभिमतस्य फलजनकतावच्छेदकशक्तिजनकव्यापारसामान्यम्। पचति यजति कुठारेण छिनत्तीत्यादौ पाकेन कुर्यात्कुठारेण छेदनं कुर्यादिति पाकयागकुठार-**

---

मयूखः।

(१) अन्वय इति। तथा च यागः फलसाधनं सोमो यागार्थ इति सिद्धम्। प्रयोजनं सोमापचारे न प्रतिनिध्युपादानं पूर्वपक्षे सिद्धान्ते तु तत्।

(४) नन्विदं धात्वर्थातिरिक्तभावनासत्वे भवेत् न तु तस्यां प्रमाणमस्ति धातुनामेव विक्लित्त्यादिफले इव तत्प्रयोजकव्यापारमात्रे फूत्कारादौ यत्नादौ च शक्तत्वादित्याशङ्कां परिहर्तुमाह–धात्वर्थेति।

निष्ठफलजनकव्यापारसामान्यप्रतीतेः । पचधातोश्च विक्लित्तिरर्थः । यजेश्च स्वत्वध्वंसे गमेश्चोत्तरसंयोगे त्यजेः पूर्वविभागे शक्तिः । एवं च धातूनां फल एव शक्तिः । उक्तव्यापारसामान्ये प्रत्ययस्य । तत्र च व्यापारोद्देश्यजनकत्वरूपं धात्वर्थस्य पारिभाषिकं करणत्वम् । व्यापारविशेषश्चेतिकर्तव्यता । एवं च तत्तद्धातुसमभिव्याहृतप्रत्ययस्य तत्तद्धात्वर्थनिष्ठफलजननानुकूलव्यापारे शक्तिः । सैव भावनेति पार्थसारथिः । मण्डनोऽप्येवम् ।

फलव्यापारश्च धात्वर्थः व्यापारश्चाधिश्रयणादिर्विक्लित्तिजनकवह्निसंयोगान्तः तदनुकूलप्रयत्नो भावनेति राणकः ।

परे तु भावना न प्रत्ययार्थः, अपि तु धात्वर्थ एव तत्रैव च फलरूपधात्वर्थस्य विधिसमभिव्याहारेण करणता, प्रत्ययार्थश्च कर्ता संख्या च, भावनाबोधवदेवात्र प्रक्रिया समेत्याहुः । तद्धातोर्नानार्थत्वापत्तेश्चिन्त्यम् ।

धातोः साध्यत्वेन क्रियाभानं घञन्तपाकादिपदात्सिद्धत्वेन क्रियाभानमिति साध्यत्वसिद्धत्वव्यवहारः ।

ननु किमिदं सिद्धत्वं साध्यत्वं च । न तावत्कारकान्वययोग्यत्वायोग्यत्वे, काष्ठैः पाको भवतीत्यादावपि कारकान्वयाङ्गीकारात् योग्यतावच्छेदकधर्मस्यानुगतस्याभावाच्च । नापि क्रियान्तरसाकाङ्क्षत्वानाकाङ्क्षत्वे, आकाङ्क्षावच्छेदकधर्मत्वस्य निर्वक्तुमशक्यत्वात् । किञ्च-पदस्य शक्यतावच्छेदकप्रकारकबोधजनकत्वनियमेन साध्यत्वसिद्धत्वप्रकारकबोधापत्त्याग्निसंयोगादिप्रकारकबोधो न स्यात् । न हि पदस्य शक्यतावच्छेदकद्वयप्रकारबोधजनकत्वं क्वचिदस्ति । सिद्धत्वादीनां व्यापकतया व्यभिचारेण शक्यतावच्छेदकत्वानुपपत्तेश्चेति चेन्न-

लिङ्गसंख्यान्वितयोग्यत्वायोग्यत्वयोः सिद्धत्वसाध्यत्वयोर्वक्तुमशक्यत्वात् । योग्यतावच्छेदकं तु प्रातिपदिकजन्योपस्थितिसम्बन्धेन प्रातिपदिकवत्त्वम् । धातुनोपस्थितस्य प्रातिपदिकोपस्थाप्यत्वेऽपि प्रातिपदिकवत्त्वाभावात् । समवायसत्त्वेऽपि वायौ रूपाभाववत् । एवं केवलप्रत्ययोपस्थितभावनायाः कारकान्वययोग्यतावच्छेदकस्य जन्योपस्थितिसम्बन्धेन प्रत्ययवत्त्वं बोध्यमिति दिक् ॥

सूत्रं तु येषामुत्पत्तावुच्चारणे प्रयोगः सिद्धरूपेऽर्थे न विद्यते तेभ्यो धात्वर्थेभ्योऽपूर्वोत्पत्तिरिति व्याख्येयम् ' प्रयोजनं सोमापचारे प्रतिनिध्युपादानं सिद्धान्ते पूर्वपक्षे तु नेति ।

## तृतीयमपूर्वाधिकरणम्—

## चोदना पुनरारम्भः ॥ ४ ॥

### प्रभा

आरभ्यत यागेनोत्पाद्यते इति **आरम्भः** अपूर्वं **पुनः** तु अङ्गीकार्यमेव यतो यागस्वर्गयोः साध्यसाधनभावस्य ज्योतिष्टोमेन यजेत स्वर्गकाम इति वाक्येन **चोदना** उपलभ्यते । कालान्तरभविस्वर्गसाधनत्वान्यथानुपपत्त्या तदुपपत्तये यागजन्यमपूर्वं कल्पनीयमिति भावः ॥ ४ ॥

( पूर्वपक्षः )

**नन्वपूर्वे (१)मानाभावाद्व्यर्थोऽयं विचार इति चेत्—**

( सिद्धान्तः )

**न—क्षणिकक्रियाया नष्टद्रव्यादीनां वा कालान्तरभाविफलजनकत्वश्रवणानुपपत्तेर्मानत्वात् । न चेश्वरेच्छाया व्यापारत्वकल्पनेन तत्परिहारः। तस्या व्यधिकरणत्वात् । नित्यतया(१) व्यापारत्वासम्भवाच्च । नापि नाशस्य व्यापारत्वकल्पनया(२) यागस्य जनकीभूताभावप्रतियोगितया (३)प्रतिबन्धकत्वापत्त्या श्रुतिबाधापत्तेः । तस्य (४)नित्यतया स्वर्गधारापत्तेः। "धर्मः क्षरति कीर्तनात्"इत्यादिस्मृतिबोध्यकीर्तनादिनाश्यत्वानुपपत्तेश्च(५) । अतः कीर्तनादिनाश्यं यागादिजन्यमात्मनिष्ठमपूर्वमेव व्यापारत्वेनाङ्गीकार्यम् ।**

**तच्च सौर्यादिकं यत्रैकमेव प्रधानं, तत्र फलजनकापूर्वस्य साङ्गप्रधानजन्यतया प्रधानानामङ्गानां च स्वरूपेण साहित्यासम्भवादपूर्वद्वारैव**

---

मयूखः ।

( १ ) **नित्यतयेति** । तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारत्वादिति भावः

( २ ) **कल्पनयेति** । निर्वाह इति शेषः ।

( ३ ) **प्रतिबन्धकत्वापत्त्येति** । कारणीभूताभावप्रतियोगित्वं हि प्रतिबन्धकत्वं तद्यदि यागध्वंसः स्वर्गजनकः स्यात् तदा तत्प्रतियोगितया यागः स्वर्गप्रतिबन्धकः स्यादिति श्रुतिबोधितयागस्य स्वर्गसाधनता विरुध्येतेति भावः ।

( ४ ) ननु कारणीभूतसंसर्गाभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वान्न यागस्य प्रतिबन्धकत्वापत्तिरित्यरुचेराह **तस्येति** । तस्य—यागध्वंसस्य, **नित्यतया**—नाशाप्रतियोगितया, यथाश्रुतं तु न युक्तं ध्वंसस्य जन्यत्वेन तत्र प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्वस्यासम्भवादिति बोध्यम् ।

( ५ ) इदं च यागध्वंसस्य द्वारत्वाशङ्कनं तार्किकरीत्या स्वमते तु अभावस्य कुत्रापि कारणत्वान्नेदं युज्यते इति मन्तव्यम् ।

साहित्यमिति प्रधानोत्पत्त्यपूर्वम्, अङ्गानां चोत्पत्त्यपूर्वाणि कल्पयित्वा तज्जन्यं परमापूर्वमङ्गीकार्यम्। तत्रापि सन्निपत्योपकारिपूर्वाङ्गानामुत्पत्त्यपूर्वोत्पादकत्वम्। तादृशोत्तराङ्गाणां तत्स्थापकत्वम् पूर्वोत्तराङ्गानामारादुपकारकाणां तदुपकारकत्वम्। उपकारश्च फलापूर्वजनने सहकारित्वमिति। एवं दर्शजन्यमङ्गापूर्वसहितमुत्पत्त्यपूर्वत्रयं पौर्णमासजन्यं तादृशमुत्पत्त्यपूर्वत्रयं च परमापूर्वजनकम्। तत्र च समुदायापूर्वद्वयमधिकं स्वीकार्यम्। अन्यथा-फलवाक्यबुद्धजनकतायाः परमापूर्वनिरूपितत्वेनोत्पत्तिवाक्यबुद्धजनकतायाः प्रातिस्विकावान्तरापूर्वनिरूपितत्वेनोपपत्तावपि समुदायवाक्यबुद्धसमुदायजनकतायाः समुदायापूर्वनिरूपितत्वं विना निर्वाहाभावात्। अतः समुदायापूर्वद्वयमावश्यकम्। यदि चोत्पत्तिवाक्यबुद्धकरणत्वानुवाद एव समुदायवाक्ये फलवाक्ये च क्रियते नापूर्वकरणत्वबोधः आरादुपकारकाणामुत्पत्त्यपूर्वोत्पादकत्वं स्थापकत्वं च सन्निपातिवदिति विभाव्यते तदा तदुत्पत्त्यपूर्वैरेवालमिति।

सूत्रस्य-आरभ्यते इत्यारम्भोऽपूर्वं तदस्ति यतो यागस्य कालान्तरभाविफलार्थत्वेन चोदनेति अर्थः।

## अथ चतुर्थं तानि द्वैधाधिकरणम्--

**तानि द्वैधं गुणप्राधानभूतानि ॥ ५ ॥ यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥६॥ यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते तस्य द्रव्यप्रधानत्वात् ॥ ७ ॥**

### प्रभा

**तानि** धात्वर्थरूपक्रियाप्रतिपादकान्याख्यातानि पदानि द्विधैव **द्वैधं** द्विविधानि **गुणप्रधानभूतानि** कानिचिद्द्रव्यं प्रति गुणभूतार्थप्रतिपादकानि कानिचिच्च द्रव्यं प्रति प्रधानभूतार्थप्रतिपादकानि ॥ ५ ॥

**यैस्तु** कर्मभिः **द्रव्यं** यागीयं **न चिकीर्ष्यते** न संस्कर्तुमिष्यते **तानि** कर्माणि सोमेन यजेतेत्यादिविधिविहितानि **प्रधानभूतानि द्रव्यस्य** सोमादेः तत्र **गुणभूतत्वात्** ॥ ६ ॥

**यैस्तु** व्रीहीन् प्रोक्षतीत्यादिविधिविहितैः कर्मभिः **द्रव्यं** व्रीह्यादिकं **चिकीर्ष्यते** संस्कर्तुमिष्यते **तत्र** तानि कर्माणि **गुणः** गुणभूतानीत्येवं **प्रतीयेत तस्य** तत्रत्याख्यातस्य **द्रव्यप्रधानत्वात्** द्रव्यं प्रधानं यस्य तत्त्वात् ॥ ७ ॥

( विषयः )

तानि त्रैधं गुणप्रधानाश्रयाणीति । तिङन्तपदानि गुणकर्मप्रधानकर्माश्रयिकर्मबोधकतया त्रिविधानि । तत्र द्रव्यदेवतादिसंस्कारकभावं यथावघातादि । अदृष्टमात्रजनकं द्वितीयम् । यथा प्रयाजादि । अंशतस्तदुभयरूपं तृतीयम् । यथा स्विष्टकृद्यागःपशुपुरोडाश उत्तमप्रयाजो मित्रावरुणदण्डदानं च । स्विष्टकृद्यागो हि देवतोद्देशांशेनेष्टदेवतास्मरणं प्रक्षेपांशेन द्रव्यप्रतिपत्तिं त्यागांशेनादृष्टं जनयति । पशुपुरोडाशयागोत्तमप्रयाजौ च देवतास्मरणं च दृष्टं त्यागप्रेक्षेपोद्देशेनादृष्टं प्रक्षेपस्याप्यदृष्टजनकत्वादिति ।

( पूर्वपक्षः )

ननु सर्वत्र धात्वर्थस्यापूर्वजनकत्वेन द्रव्यस्य धात्वर्थजनकत्वेन मत्वर्थलक्षणया भावनान्वयात्प्रधानकर्मत्वमेवास्तु कृतं वैरूप्येणेति चेत्—

( सिद्धान्तः )

न—अनेकादृष्टकल्पनापत्तेः । अवघातजन्यमेकम् । व्रीहिजन्यनियमेन द्वितीयम् । तदपेक्षयावघातनियममात्रजन्यादृष्टकल्पने लाघवात् ॥

नन्वाश्रयाणि विधिवशाददृष्टार्थानि वक्ष्यमाणदेवतास्मरणाकीर्णकरद्रव्यप्रतिपत्तिरूपदृष्टार्थान्येव अदृष्टकल्पनाया अन्याय्यत्वादेकप्रयोजननिराकाङ्क्षत्वाच्चेति चेन्न—अंशभेदेनोभयार्थत्वसम्भवात् । यजतिवाक्यदेवतोद्देशांशस्य स्मरणार्थत्वेऽपि प्रक्षेपांशस्य प्रतिपत्त्यर्थत्वेऽपि च त्यागांशस्यानन्यप्रयोजनकस्यादृष्टार्थत्वात् । न च द्रव्यप्रक्षेपयोर्यागावयवत्वेन कथं परस्परं गुणप्रधानत्वमिति वाच्यम् । स्विष्टकृद्यागे गुणभूतस्य यागान्तरीयद्रव्यप्रतिपत्त्यर्थत्वे बाधकाभावात् । न चैवं स्विष्टकृद्यागाङ्गता होमस्य कथमिति वाच्यम् । स्विष्टकृद्यागीयचतुरवत्तप्रतिपादनद्वारस्यार्थस्य भावात् ॥

अथ पञ्चमं समार्गाधिकरणम्—

**धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ८ ॥ तुल्यश्रुतित्वाद्वेतरैः सधर्मा स्यात् ॥ ९ ॥ द्रव्योपदेश इति चेत् ॥ १० ॥ न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ ११ ॥**

प्रभा

धर्ममात्रे दृष्टोपकाराजनके कृत्स्ने संमार्गादिरूपे कर्म प्रधानकर्मत्वं स्यात् द्रव्यनिष्ठोपकारस्य प्रयाजादिवत् प्रयाजादिभ्य इव अनिर्वृत्तेः अनिष्पादनात् ॥८॥

सिद्धान्तमाह—वा शब्दः पूर्वपक्षव्यावृत्तौ इतरैः दृष्टोपकारजनकैः अवघातादिभिः सधर्मा गुणकर्मत्वेन तुल्यः स्यात् कुतः तुल्यश्रुतित्वात् व्रीहीनवहन्तीतिवद् ग्रहं संमार्ष्टि व्रीहीन्प्रोक्षतिइत्यादावपि द्रव्यगतप्राधान्यबोधकाद्वितियाश्रुतेस्तुल्यत्वात् ॥ ९ ॥

शङ्कते-व्रीहीन् प्रोक्षतीत्यादौ द्वितीयया सक्तून् जुहोत्यत्रेव करणत्वबोधनेन द्रव्योपदेशः द्रव्यस्य गुणतयैवोपदेश इति चेत् ॥ १० ॥

न लोकवत् घटं करोतीत्यादिलौकिकप्रयोग इव व्रीहीन् प्रोक्षतीत्यादौ "कर्मणि द्वितीया" इत्यनुशासनेन तदर्थत्वात् कर्मत्ववाचकत्वात् तस्य सक्तून् जुहोतीत्यादेः सक्त्वादेः च शेषभूतत्वात् भूतभाव्युपयोगासम्भवेन प्राधान्यस्य स्वीकर्तुमशक्यतयागत्या द्वितीयायाः करणत्वे लक्षणाश्रयणात् ॥ ११ ॥

( पूर्वपक्षः )

(१)ननु यत्र द्रव्यनिष्ठदृष्टसंस्कारजनकत्वं धात्वर्थस्य तत्रास्तु गुणकर्मत्वम्, तदभावे व्रीहीन् प्रोक्षति स्रुचः संमार्ष्टीत्यादौ प्रधानकर्मत्वमस्त्विति चेत्—

( सिद्धान्तः )

न प्रोक्षणादिजन्यादृष्टस्य तत्र च व्रीह्यादिसाधननियमादृष्टस्य च कल्पने गौरवात् । तदपेक्षयैकादृष्टकल्पने लाघवात् साध्यतावाचकद्वितीयाबाधापत्तेश्च । "सक्तून् जुहोति" इत्यादौ सक्तूनां साध्यत्वायोग्यत्वात् द्वितीयाभङ्ग इति । न च सक्तुभिर्मलिनं श्रीणातीति श्रयणोपयुक्तसक्तुप्रतिपत्तिविधिः । श्रयणोपयुक्तप्रतिपत्तिसंभवेन सक्तुपदस्य तदेकदेशे लक्षणापत्तेः ॥

अत्राहुः-सक्तुशब्देऽपि न विनियोगभङ्गः । सप्तविभक्तौ लक्षणानङ्गीकारात् । किन्तु सक्तूनां धात्वर्थे कर्मत्वेनान्वयः । तच्च धात्वर्थतावच्छेदकफलशालित्वरूपम् । न च धात्वर्थस्य क्रियादेः तदन्वयिसक्तूनामकारकतया कारकानुवृत्तिविहिता द्वितीया न स्यादिति वाच्यम् । क्रियान्वयित्वधात्वर्थतावच्छेदकफलशालित्वान्यतरत्वस्य कारकत्वात् । एवं च सक्तुकर्मकहोमेन प्रधानफलं भावयेदित्यर्थः । अत एवानीप्सितकर्मणोऽकथितादेश्च धात्वर्थतावच्छेदकफलद्वारेण धात्वर्थ एवान्वयो न भावनायाम् । विधिसमभिव्याहृतकर्मत्वस्य भावनान्वयित्वनियमात् । एवं च चरुमुपदधातीति चरोः स्वाध्यायोऽध्येतव्य इत्यत्र

---

मयूखः ।

( १ ) पूर्वाधिकरणे दृष्टोपकारकत्वलाभात् गुणकर्मत्वे साधिते यत्र सा न लभ्यते तत्र प्रधानकर्मत्वं भवत्विति दृष्टोपकारकत्वरूपसिद्धान्तहेतुप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानादनन्तरसंगतिं सूचयन् विषयप्रदर्शनपूर्वकं पूर्वपक्षमाह—नन्विति ।

स्वाध्यायस्य धात्वर्थकर्मत्वेनान्वयः । अर्थज्ञानं चयनादेर्भाव्यत्वम् भावनाकर्मत्वम् । एवं च वार्तिककारीयो धात्वर्थकर्मभावनाकर्मणोर्भेदेन व्यवहारः सङ्गच्छत इति ॥

सूत्रस्य तदर्थत्वात् द्वितीयया तादर्थ्यबोधात्तस्यान्यशेषभूतत्वेन संस्कार्यत्वसम्भवादित्यर्थः ।

अथ षष्ठं स्तुतशस्त्राधिकरणम् ।

**स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १२ ॥ अर्थेनापकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ १३ ॥ वशावद्वा गुणार्थं स्यात् ॥१४॥ न श्रुतिसमवायित्वात् ॥१५॥ व्यपदेशभेदाच्च ॥१६॥ गुणश्चानर्थकः स्यात् ॥ १७ ॥ तथा याज्यापुरोरुचोः ॥ १८ ॥ वशायामर्थसमवायात् ॥१९॥ यत्रेति वाऽर्थवत्त्वात् ॥२०॥ नत्वाम्नातेषु ॥२१॥ दृश्यते ॥२२॥ अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥२३॥ शब्दपृथक्त्वाच्च ॥२४॥ अनर्थकं च तद्वचनम् ॥२५॥ अन्यश्चार्थः प्रतीयते ॥२६॥ अभिधानं च कर्मवत् ॥२७॥ फलनिर्वृत्तिश्च ॥ २८ ॥**

प्रभा

**याज्यावत्** याज्या इव **देवताभिधानत्वात्** देवताबोधकत्वात् **स्तुतशस्त्रयोस्तु** स्तुतशस्त्रयोरपि **संस्कारः** देवतास्मरणेन संस्कार एव फलम् ॥ १२ ॥

अस्मिन्पूर्वपक्षे शङ्कते एवं सति माहेन्द्रयागक्रमे पठितम् "अभित्वा शूर नोनुमः" इत्यैन्द्रऋग्द्वयम् **देवतानामचोदनार्थस्य** देवतानामघटितचोदनाप्रतिपाद्यमिन्द्राद्यर्थं प्रति **गुणभूतत्वात्** अङ्गभूतत्वात् पूषानुमन्त्रणमन्त्रवत् **अर्थेन** देवतासंस्काररूपप्रयोजनानुरोधेन **अपकृष्येत** माहेन्द्रयागादपनीय ऐन्द्रयागे नीयेत ॥ १३ ॥

समाधत्ते **वशावत्** "सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत" इतिवशानामघटितचोदनाप्रतिपाद्यस्यापि पशोः वशात्वगुणविनिर्मोकेण प्रत्यायकं "छागस्य वपायाः मेदसः" इति मन्त्रः स्वीक्रियते तद्वत् **गुणार्थं वा** महेन्द्रयागे एव महत्त्वरूपगुणविनिर्मोकेण विशेष्यभूतेन्द्रमात्रप्रतीत्यर्थमेव ऋग्द्वयं **स्यात्** तथा च नापकर्ष इति भावः ॥ १४ ॥

एवं पूर्वपक्षिसमाधाने सिद्धान्ती शङ्कते—न ऋग्गतेनेन्द्रशब्देन प्रकृतमाहेन्द्रग्रहस-

म्बन्धिदेवताभिधानं युज्यते **श्रुतिसमवायित्वात्** श्रुत्या माहेन्द्रं ग्रहं गृह्णातीति विधिगतशब्देनैव देवतायाः कर्मणि समवायित्वात् सम्बन्धित्वात् । अयं भावः माहेन्द्रमिति ताद्धितेन त्यज्यमानद्रव्योद्देश्यत्वरूपं देवतात्वं महेन्द्रपदे एव बोध्यते न बृहच्छब्दादिपदे नापि इन्द्रपदे तत्रोद्देश्यत्वस्य उच्चार्यत्वरूपत्वात् तथाचोत्कर्ष एव प्रसज्यत इति॥ १५॥

इन्द्रमहेन्द्रदेवतयोर्भेदे हेत्वन्तरमप्याह—"बहु दुग्धीन्द्राय देवेभ्यः बहु दुग्धि महेन्द्राय देवेभ्यः" इति **व्यपदेशभेदाच्च** तयोर्भेदः ॥ १६ ॥

विपक्षे बाधकमाह—इन्द्रमहेन्द्रयोरैक्ये **गुणश्च** निर्दिश्यमानः महत्त्वरूपो गुणः **अनर्थकः** स्यात् ॥ १७ ॥

किञ्च तयोरैक्ये **याज्यापुरोरुचोः** इन्द्रमहेन्द्रदेवत्ययोः याज्यायाः पुरोनुवाक्यायाश्च "महानिन्द्रो य ओजसा" 'ऐन्द्रं सानसिं रयिम्" भेदेन पाठः **तथा अनर्थकः** स्यादतो भेद एव ॥ १८ ॥

वशावद्वेति दृष्टान्तो विषम इत्याह—वशायां वशात्वगुणविशिष्टद्रव्यविधौ **अर्थसंयोगात्** विधिगतशब्दार्थस्यैव द्रव्यस्य कर्मणि सम्बन्धात् छागशब्देन विशेष्यमात्रप्रकाशनं युक्तम् माहेन्द्रे तु न तत्र महत्त्वस्य महत्पदोच्चारणद्वारेणैवोपकारकत्वेनानुच्चारितस्य साधनत्वासम्भवादत उत्कर्ष एव स्यात् देवतात्वावृत्त्वे ॥ १९ ॥

एवं स्थिते पूर्वपक्षी इष्टापत्त्या प्रतिविधत्ते—**अर्थवत्त्वात्** अर्थानुसारित्वात् **यत्र** इन्द्रो देवता तत्र अस्या ऋच उत्कर्ष इष्ट इति भावः ॥ २० ॥

एवं पूर्वपक्षिणोक्ते एकदेशी शङ्कते—ऐन्द्रस्य ऋग्द्वयस्य यत्रेन्द्रो देवता तत्रोत्कर्षसम्भवेऽपि अन्येषु तत्तद्ब्राह्मणाभ्यासंनिधौ **आम्नातेषु** 'याम्याः शंसति शिपविष्टवतीः शंसति कुसुम्भकसूक्तमन्वाह अक्षसूक्तं मण्डूकसूक्तं मूषिकसूक्तमन्वाह' इत्यादिविधिविहितेषु मन्त्रेषु प्रकरणे यमादीनामभावात् प्रकरणबहिर्भूते च यमादिदैवत्ये कर्मणि सामान्यसंबन्धबोधकप्रमाणाभावात् कुसुम्भकादीनां च कुत्रापि देवत्वाभावात् उत्कर्षानुपपत्त्या न **तु** अर्थवत्त्वोपपत्तिः ॥ २१ ॥

पूर्वपक्षी परिहरति—मण्डूकसूक्तस्य प्रकरणाज्ज्योतिष्टोमसम्बन्धेऽवगते आनर्थक्यतदङ्गन्यायेन तदङ्गभूते 'मण्डूकेनाग्निं विकर्षति' इतिविधिविहितमण्डूकप्रकाशकत्वेनाग्निचयने, मूषिकसूक्तस्य प्रकरणाज्ज्योतिष्टोमाङ्गभूतयूपैकदेशिन्यां 'सर्वे वा अन्ये यूपाः पशुमन्तोथोपशय एवापशुः' इत्युपक्रम्य 'आखुस्ते पशुरितिब्रूयात्'इतिमन्त्रविधानेन आखुस्तुतिद्वारा तत्सम्बन्धुपशयस्तुत्या उपशययूपे विनियोगः, एवं याम्यादिमन्त्राणां प्रकरणे कथमपि निवेशासम्भवात् अन्यत्र च सामान्यसम्बन्धबोधकप्रमाणाभावात् उत्कर्षासम्भवात् अगत्या प्रकृते ग्रहदेवतैव लक्षणया प्रकाश्यत इति अत्रैव निवेशः इति सर्वेषामर्थवत्त्वं दृश्यते तस्मादुत्कर्षाभ्युपगमे बाधकाभावात् स्तोत्रं शस्त्रं च संस्कारकमेव ॥ २२ ॥

सिद्धान्तमाह—अपि वा इति पूर्वपक्षव्यावृत्तिः 'आज्यैः स्तुवते, प्रउगं शंसति' इत्यादौ श्रुतिसंयोगात् गुणिनिष्ठगुणाभिधानवाचकस्तुशंसरूपधातुश्रुतिसमभिव्याहाराद् स्तौतिशंसती स्तोत्रशस्त्रे कर्मणी प्रकरणे एव क्रियोत्पत्तिं देवतागतगुणप्रकाशनरूपकार्यद्वारा अपूर्वोत्पत्तिं विदध्याताम् कुर्याताम् गुणिप्रकाशनेन दृष्टार्थत्वं तु न युक्तं स्तुशंसधात्वोर्गुणिनिष्ठगुणप्रकाशने शक्ततया गुणोपसर्जनकगुणिबोधकत्वे लक्षणापत्तेः देवताऽप्रकाशकतया संस्कारकर्मत्वायोगेन आत्मसमवेतापूर्वजनकतया प्रयाजादिवत्प्रधान कर्मत्वमेवेष्टव्यम् ॥ २३ ॥

हेत्वन्तरमाह—शब्दपृथक्त्वात् 'द्वादशस्तोत्रोऽग्निष्टोमः द्वादशशस्त्रोऽग्निष्टोमः' इति द्वादशशब्देन स्तोत्रशस्त्राणां भेदावगमात् च स्तोत्रशस्त्रे प्रधानकर्मणी अयं भावः मम अपूर्वभेदेन तत्साधनानामपि भेदाद् द्वादशत्वं युज्यते तव तु देवताप्रकाशनरूपस्य दृष्टसंस्कारस्य फलतया प्रकाशनानां प्रत्यृचं प्रतिपदं वा भिन्नतया द्वादशत्वानुपपत्तिः प्रकाशनत्वेनैक्ये सुतरामिति ॥ २४ ॥

प्रकाशनार्थत्वपक्षे तद्वचनम् अग्निष्टुति 'आग्नेया ग्रहा भवन्ति' इति वचनेन प्राकृतग्रहानुवादेनाग्निदेवताविधौ कृते प्राकृतदेवताबाधवत् तत्प्रकाशकमन्त्रबाधेनाग्निप्रकाशकमन्त्रान्तराणां न्यायादेव प्राप्तेः 'आग्नेयीषु स्तुवत' इतिवचनम् अनर्थकं च अनर्थकमेव स्यात् मम तु अदृष्टार्थतया सत्यपि ग्रहाणामाग्नेयत्वे कर्मासमवेतगुणिनिष्ठस्यापि गुणस्य कीर्तनेन प्राकृतानामेव मन्त्राणामुच्चारणप्रसक्त्या तन्निवृत्त्यर्थं 'आग्नेयीषु स्तुवत' इति सार्थकम् ॥ २५ ॥

'संबद्धे वा स्तोत्रं शस्त्रं च' इति श्रुत्या स्तोत्रशस्त्रयोः सम्बन्धप्रतीत्या सम्बन्धस्य भेदाधिष्ठानतया स्तोत्रशस्त्रयोः स्वरूपतः फलतो वा भेद आस्थेयः तत्र उभयोरपि गुणिनिष्ठगुणाभिधानरूपत्वात् स्वरूपतो भेदासम्भवः नच प्रगानाप्रगानकृत एव स्वरूपभेदोऽस्त्विति वाच्यम् स्वरूपतः फलतो वा भेदसम्भवे प्रगानाद्युपकृतभेदेन भेदाश्रयणस्यानुचितत्वादिति अर्थः स्तोत्रशस्त्रयोः फलं अन्यश्च अन्यदेव प्रतीयते स च तयोरपूर्वार्थत्वे सम्भवति अदृष्टयोर्भिन्नत्वात न पुनः देवताप्रकाशनरूपदृष्टार्थत्वे इति फलतस्तयोर्भेदसिद्धया सम्बन्धसिद्धिः ॥ २६ ॥

अभिधानं स्तोत्रं शस्त्रादिरूपं सामान्याभिधाने आज्यपृष्ठप्रउगादिरूपं विशेषाभिधानं च कर्मवत् प्रधानकर्मणामिव दृश्यते तच्च आरादुपकारकत्वपक्ष उपपद्यते न संस्कारकर्मत्वपक्षे संस्कारस्य संस्कार्यनिरूपणाधीननिरूपणस्य संस्कार्येणैवावच्छेदसिद्धौ अवच्छेदकीभूतसंज्ञानपेक्षत्वात् ॥ २७ ॥

'स्तुतस्य स्तुतमूर्जस्वत्पयस्वदा मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनामहे भक्षीमहि प्रजामिष्टम् सा मे सत्याशीर्यज्ञस्य भूयात्' इति मन्त्रे भावनिष्ठान्तस्तुतपदेन स्तोत्र क्रियोपादानात् स्तोत्रादेव फलनिर्वृत्तिश्च फलनिष्पत्तिश्च प्रार्थिता न देवतायाः अतो

ऽपि स्तोत्रशस्त्र प्रधानकर्मणी । त्वं स्तोत्रस्य मध्ये स्तोत्रमसि तदेवं भूतं स्तोत्रस्य मध्ये स्तोत्रमूर्तिस्त्वत्पयस्त्वद् भूत्वा माम् आगम्यात् इन्द्रवन्तः इन्द्रोपलक्षितदेवतावन्तो वयं त्वां याचामहे प्रजामिष्टं भजेमहीति सेयं यज्ञपदलक्षितस्य स्तोत्रस्याशीः सत्या भूयादिति मन्त्रस्यार्थः ॥ २८ ॥

( संशयः )

आज्यैः स्तुवते (१)प्रउगं शंसतीति विहितस्तोत्रशस्त्रयोर्गुणगुणिसम्बन्धप्रकाशनरूपयोः प्रगीताप्रगीतमन्त्रसाध्यतया मन्त्रयोर्गुणकर्मत्वं प्रधानकर्मत्वं वेति चिन्ता ।

( पूर्वपक्षः )

तत्र देवतास्मरणार्थतया दृष्टार्थत्वादवघातवद्गुणकर्मत्वं गुणस्मरणांशेऽदृष्टार्थत्वं गुणिस्मरणांशे दृष्टार्थत्वमित्याश्रयिकर्मत्वं वेति चेत्—

( सिद्धान्तः )

न—गुणविशेष्यकगुणिसम्बन्धप्रकारकबोधानुकूलव्यापारवाचकयोः स्तौतिशंसत्योर्गुणिविशेष्यकगुणकथने लक्षणापत्तेः।न च विनिगमकाभावः।वक्रकेशं देवदत्तमानयेत्यादौ स्तुतिबुद्ध्यभावस्यानुभविकत्वात्। न च दृष्टार्थत्वाय लक्षणाङ्गीकारः । प्रकाशनस्य लिङ्गादेव प्राप्तिसम्भवेन विधिवैयर्थ्यापत्तेः।स्तोत्रस्य तदर्थत्वे स्तुतित्वव्याघातः। अतोऽदृष्टार्थानि । एवं चादृष्टार्थानां (२)द्वादशत्वात् द्वादशस्तोत्रशस्त्रे ज्योतिष्टोम इत्युपपद्यते । अन्यथा–प्रत्यृचं प्रतिपदं वा प्रकाशनानां बहुत्वेन तदनुपपत्तिः । किञ्च (३)याजुर्वैदिकमाहेन्द्रग्रहयागाभ्यासक्रमेणाम्नातानां सामवैदिकानाम् ‘अभित्वा शूर नोनुम’ इत्यृचां यागीयदेवतास्मरणानर्हत्वेन प्रकरण एव यत्रेन्द्रो देवता तत्रोत्कृष्येतेति क्रमबाधापत्तिः । दुर्बलस्या-

---

मयूखः ।

( १ ) पूर्वाधिकरणे साधितस्य गुणकर्मत्वस्येहापवादकरणादपवादसंगत्याह— आज्यैरिति । प्रउगसंज्ञकः शस्त्रविशेषः । स्तोत्रं प्रगीतमन्त्रसाध्यगुणगुणिसम्बन्धकीर्तनम् । तदेवाप्रगीतमन्त्रसाध्यं शस्त्रमिति तयोर्भेदः ।

( २ ) अदृष्टार्थानामिति । ‘द्वादशस्तोत्रोऽग्निष्टोमः द्वादशशस्त्रोऽग्निष्टोम’ इति श्रुतं तत्र मम स्तोत्रसाध्यानामदृष्टानां द्वादशत्वात् स्तोत्राणां द्वादशत्वमुपपद्यते तव तु अर्थप्रकाशनरूपदृष्टार्थत्वात् प्रत्यृचं प्रतिपदं वा अर्थप्रकाशनानां बहुत्वान्नोपपद्यते-इतिभावः ।

( ३ ) किञ्चेति । स्तोत्राणामदृष्टार्थत्वे माहेन्द्रयागसन्निधौ इन्द्रस्तुतिरुपपद्यते दृष्टार्थत्वे तु माहेन्द्रयागे इन्द्रस्य देवतात्वाभावात् तत्प्रकाशनस्यानुपयुक्तत्वात् ऐन्द्रयागे उत्कर्षः कर्तव्य इति तत्र स्तुतिरनर्थिका स्यादिति निर्गलितोऽर्थः ।